येत् ॥ रोचनामूलमैश्वर्यं स्वकरक्रीकृत्यमंबुना ॥ ८ ॥ जप्त्वाचाष्टोत्तरशतं पूर्वमत्रविचक्षणः ॥ श्रीखंडमीश्वरीमूलं कुंकुमागरुटंकणम् ॥ ९ ॥ रोचना च समं सर्वं एतदंगानुलेपनात् ॥ दर्शनस्पर्शनादेव नरनारीविमोहनम् ॥ १० ॥ समंत्रं मानिनं वापि स्ववशं कुरुते नरम् ॥ ईश्वरीमूलमादाय ग्रहणे सोमसूर्ययोः ॥ ११ चूर्णितं नेत्रयोर्न्यस्तं करस्थं वा ग्रहापदम् ॥ समस्त-रोगशांतिं च ईश्वरीमूलसेवनात् ॥ १२ ॥ तदेव नस्ये विन्यस्तं कांजिकेन विषापहम् ॥ तदेवाशनसंयुक्तं जंगमादिविषं हरेत् ॥ १३. ॥ ३. अथ **करंजकल्पः** ॥ करंजपल्लवान्नम्रान्घृतेन परिपाचितान् ॥ सद्यो जयति दुर्वा-रमोहतस्य विजृंभणम् ॥ १ ॥ तैलेन पाचितास्तस्य जटो वै चानुकामलम् जयेदवश्यं नियतं संधिवातं न संशयः ॥ २ ॥ ४. अथ **पुनर्नवाकल्पः** ॥ पुनर्नवस्य शुभ्रस्य मूलं गोघृतमिश्रितम् ॥ अंजितं हरति क्षिप्रं नेत्रान्तर-गतान् रुजान् ॥ १ ॥ आज्येन पुष्पं मधुनाश्रुपातं भृंग्या च कंडू पटलं च नित्या ॥ रात्र्यंधमाज्येन निशा च रोमा पुनर्नवा नेत्ररुजोपहंत्री ॥ रक्तार्थे संप्रजीर्यत्वे पक्षे रोधो निशा मिसा (?)॥ छायाशुष्कं च तच्चूर्णं समूलफलपल्लवान् ॥ ३ ॥ सिंधूस्थगोघृतेनोक्तं गुल्मप्लीहविनाशनम् ॥ त-च्चूर्णं सितयासाकं यद्वा क्षीरेण यः पिबेत् ॥ ४ ॥ प्रभातकाले सततं जीवेत्तु शरदां शतं ॥ तच्चूर्णं ज्योतिसंयुक्तं कायानलविवर्द्धनम् ॥ ५ ॥ तज्जयं वारिणा पिष्ट्वा नेत्रगाजीर्णनाशिनी ॥ शिखामधुसमायुक्ता सेविता च जरां जयेत् ॥ ६ ॥ पुनर्नवाशिफाचूर्णं पलार्द्धं पयसा सह ॥ मासैकं मासयुग्मं वा पीतं जीर्णेन भोजनम् ॥ ७ ॥ क्षीराण्यवा विनश्यंति शिरो-रोगज्वरादयः ॥ ५. अथ **पलाशकल्पः** ॥ पातालयंत्रमाहृत्य पलाशत-रुबीजकम् ॥ निष्कद्वयमितं तैलं मध्वाज्येन समं पिबेत् ॥ १ ॥ मासमा-त्रेण योगींद्रो नक्षत्राण्यपि पश्यति ॥ अनेककालजीवी स्यात् प्रियमानः सुरासुरैः ॥ २ ॥ धात्रीरसेन तद्बीजचूर्णं सम्यक् विभावयेत् ॥ सप्ताहं पयसा तद्वच्छोषयित्वा ततः पुनः ॥ ३ ॥ सप्ताहं सेवनात्तस्य दूरदृष्टिर्भ-वेन्नरः ॥ तेजसा सूर्यसंकाशो आल्हादे चंद्रमा इव ॥ ४ ॥ अतिदारुण-

वेगेन वायुं बुध्या बृहस्पतिः ॥ वाचा सरस्वतीं जित्वा जीवेदाचंद्रतारकम् ॥ ५ ॥ आतपे शोषितं तस्य प्रसूनजनितं रजः ॥ क्षीरेणार्द्रीकृतं स्निग्धं भांडे विन्यस्य संस्थितम् ॥ ६ ॥ एकविंशद्दिनादूर्ध्वं सुमुहूर्तेशिवांतिके ॥ भक्षयेत्पयसाहारं कांजिकाम्लादिवर्जितम् ॥ ७ ॥ एकविंशद्दिनात्तस्य कल्पेन खचरो भवेत् ॥ बलेन रोचवत् भीमसेनतुल्यपराक्रमः ॥ ८ ॥ जरामरणनिर्मुक्तो न कदाचित् क्षयं व्रजेत् ॥ तद्वच्चूर्णं समादाय पलमात्रं पिबेद्यदि ॥ ९ ॥ चतुः पलेन दुग्धेन मासमात्रं न संशयः ॥ तन्मूत्रेण प्रशांतोष्णं ताम्रं स्वर्णत्वमाप्नुयात् ॥ १० ॥ अनेककालजीवी स्यात् कंदर्पे इव मूर्तिमान् ॥ ब्रह्मवृक्षस्य पंचांगं शायाशुष्कं सुचूर्णितम् ॥ ११ ॥ मध्वाज्याभ्यां लिहेत्कर्षं वर्धयेत्स जरां जयेत् ॥ जीवेद्वर्षसहस्रैकं दिव्यकायो भवेन्नरः ॥ १२ ॥ ब्रह्मवृक्षमितस्थूलं छेदयेदर्धभागतः ॥ अधो अरत्निहस्तं स्यात्तस्य मूर्ध्नि जलं कृतम् ॥ १३ ॥ पंचजातीफलैः पूर्यं तत्काष्ठेन निरुध्य च ॥ कुशैस्तु वेष्टयेत्सर्वं लेप्यं मृद्रोमयैः पुनः ॥ १४ ॥ आवेष्टयेै वस्त्रखंडेन ततो मृद्रोमयैर्लिपेत् ॥ शुष्के गजपुटं देयं परितोरण्यकोद्भवैः ॥ २५ ॥ स्वांगशीतलमुद्धृत्य सद्रवानि फलानि च ॥ भक्षे मध्वाज्यसंयुक्ता भांडे तान्येव भक्षयेत् ॥ १६ ॥ यथेष्टभुग्ग्रहांतस्थं क्षीरहारी जरां जयेत् ॥ छिद्रं पश्यति मासेन निधानानि च भूतले ॥ जीवेद्ब्रह्मदिनं यावत् सर्वरोगविवर्जितः ॥ पत्रं पुष्पं फलं ग्राह्यं सूक्ष्मचूर्णं तु कारयेत् ॥ १८ ॥ कृष्णगोक्षीरसंयुक्तं भक्षयेद्वा समाहितः ॥ द्विरष्टवर्षकायोसौ जीवेद्वर्षशतत्रयम् ॥ १९ ॥ तस्य पुष्पस्य निर्यासं तालकेन सुभावितम् ॥ तेन तालस्य कल्केन द्वात्रिंशांशेन वेधति ॥ २० ॥ वंगं भवति तत्तारं कुंदपुष्पस्य सन्निभम् ॥ तस्य पुष्परसं चैव गंधकं चैव भावितम् ॥ २१ ॥ लिप्तानि शुल्बपत्राणि पुटपाकेन कांचनम् ॥ तस्य बीजस्य यत्तैलं गंधकेन समर्दितम् ॥ २२ ॥ पारदं तेन कल्केन द्वात्रिंशत्कांचनं भवेत् ॥ श्वेतपलाशपंचांगं चूर्णितं मधुना सह ॥ २३ ॥ कर्षैकं भक्षयेन्नित्यं व्याधिमृत्युजरापहम् ॥ ब्रह्मायुर्जायते सिद्धिः स्पर्शमात्रे न संशयः ॥ २४ ॥

ॐ अमृतं कुरु अमृतमालिन्यै नमः ॥ अमृतं मंत्रेण सर्वयोगाः संत्यभिमंत्रिताः ॥ कर्णीर्याः ॥ (२) अथान्यच्च पलाशकल्पः ॥ कैलासशिखरे रम्ये नानाधातुविचित्रिते ॥ नानाद्रुमलताकीर्णे नानापुष्पोपशोभिते ॥ १ ॥ देवैर्दैत्यैश्च मुनिभिरप्सरोगणसेविते ॥ महादेवं तु देवेशं षण्मुखः पर्यपृच्छत ॥ २ ॥ कथयस्व प्रसादेन मनुष्याणां हिताय वै ॥ आयुष्यार्थं तु संप्राप्तं रसायनमनुत्तमम् ॥ ३ ॥ शिव उवाच ॥ साधु षण्मुख तत्वेन रहस्यं दुर्लभं परम् ॥ मोक्षार्थी च धनार्थी च कामार्थी च विशेषतः ॥ ४ ॥ ब्रह्मवृक्षस्य बीजानि वितुषीकृत्य बुद्धिमान् ॥ अथ धात्रीरसेनैव अजाक्षीरेण भावयेत् ॥ ५ ॥ सप्ताहं शोषयित्वा च योजयित्वा विचक्षणः ॥ बीजं यंत्रे ततः क्षिप्त्वा तैलं संगृह्य यत्नतः ॥ ६ ॥ तत्तैलं पलमात्रं तु पाययित्वा विधानतः ॥ तस्य कर्म प्रवक्ष्यामि मनुष्याणां हिताय च ॥ ७ ॥ एकमासप्रयोगेण क्षीराहारप्रयत्नवान् ॥ द्विगुणं परिहारासौ सतैलं गुडवर्जितम् ॥ ८ ॥ श्रुतित्वं धारयेद्धीररष्टवर्षो युवाकृतिः ॥ सुभगो दर्शनीयस्तु नवनागबलोपमः ॥ ९ ॥ सुपर्णवर्णसदृशः कर्णिकारसमद्युतिः ॥ षण्मासस्य प्रयोगेण जीवेद्वर्षसहस्रकम् ॥ १० ॥ प्रथमं ते समाख्यातं द्वितीयं श्रुणु षण्मुख ॥ अहं सम्यक् प्रवक्ष्यामि तव स्नेहेन पुत्रक ॥ ११ ॥ तैलस्य पलमात्रं तु मधुना सह यः पिबेत् ॥ इतिहासपुराणानां श्रोता वक्ता च जायते ॥ १२ ॥ निधानमद्भुतं पश्येद्भूमेराकाशगामिनः ॥ मेधाविनो सुपुत्राणां सहस्रं लभते नरः ॥ १३ ॥ या या कामयते नारी साभवन्नवयौवना ॥ तस्य मूत्रपुरीषाभ्यां लोहं भवति कांचनम् ॥ १४ ॥ वर्षाणि त्रीणि द्वे वापि षण्मासमथ वापि च ॥ अथ वा वर्षमेकं तु ब्रह्मतैलं पिबेन्नरः ॥ १५ ॥ देहे हेमः प्रजायेत स्वयं चैवाक्षयो भवेत् ॥ प्रयत्नेन नमस्कृत्वा स्वयं देवेन भाषितम् ॥ १६ ॥ द्वितीयं कथितं वत्स तृतीयं श्रुणु षण्मुख ॥ तैलाज्यमधुसंगृह्य मध्वाज्यकुडवं पिबेत् ॥ १७ ॥ तस्य पीतस्य तु फलं श्रुणु वक्ष्यामि तत्वतः ॥ संवत्सरप्रयोगेन त्विदं भवति लक्षणम् ॥ १८ ॥ अग्निना नोदकेनापि

तस्य मृत्युर्न जायते ॥ इतिहासपुराणानां श्रोता श्रुतिधरो भवेत् ॥ १९ ॥ तस्य मूत्रपुरीषेण शुल्बं भवति कांचनम् ॥ यस्त्वनेन विधानेन द्वादशाब्दं करोति यः ॥ २० ॥ स्वयं कवचशरीरेण ब्रह्मलोकं स गच्छति ॥ एतत्तु परमं गुह्यं नाख्यातं कस्यचिन्मया ॥ २१ ॥ तृतीयं कथितं वत्स चतुर्थं श्रृणु पुत्रक ॥ तैलस्य गुड संगृह्य स्निग्धभांडे निधापयेत् ॥ २२ ॥ मासार्द्धं तु समुद्धृत्य शुद्धकायो विचक्षणः ॥ कायस्यापि बलं कृत्वा क्षीराशी मुद्गभोजनः ॥ २३ ॥ भुंजते नियमस्थस्य ब्रह्मचारी जितेन्द्रियः ॥ सप्तरात्रिप्रयोगेण किन्नरैः सह गीयते ॥ २४ ॥ मेधावी संपुटिश्चैव दशाहे तु न संशयः ॥ जीवेद्वर्षसहस्रं तु अक्षीणनवयौवनः ॥ २५ ॥ सुभगो दर्शनीयश्च केतांजनसमप्रभः ॥ चतुर्थं तु समाख्यातं पंचमं श्रृणु पुत्रक ॥ २६ ॥ एकैकं भक्षयेद्बीजं तिलशर्करया सह ॥ संवत्सरप्रयोगेण श्रृणु वक्ष्यामि तत्फलम् ॥ २७ ॥ पूर्वोक्तानां फलं तत्तु यत्फलं तस्य जायते ॥ पंचमं कथितं गुप्तं षष्ठं च श्रृणु सांप्रतम् ॥ २८ ॥ पत्राणि ब्रह्मवृक्षस्य कोमलानि विशेषतः ॥ छायायां शोषयित्वा तु लोहभांडे विनिक्षिपेत् ॥ २९ ॥ सूक्ष्मचूर्णं विधायेत्थं ब्रह्मचारी विशेषतः ॥ गृहीत्वा चैव पुण्याहे जायते जयमंगलम् ॥ ३० ॥ प्रद्योतनः प्रकर्तव्यं प्रारंभे हि विचक्षणः ॥ फलं चूर्णस्य संगृह्य तक्रेण सह यः पिबेत् ॥ ३१ ॥ जीर्णान्ते भोजनं पथ्यं लवणाम्लविवर्जितम् ॥ तृषितस्तु पिबेत्क्षीरं अथवा शीतलं जलम् ॥ ३२ ॥ मासमात्रप्रयोगेण जायते भ्रमरोपमः ॥ षण्मासस्य प्रयोगेन कर्णिकारसमद्युतिः ॥ ३३ ॥ सहस्रायुर्भवेद्धीमान्वलीपलितवर्जितः ॥ षष्ठं तु कथितं वत्स सप्तमं श्रृणु पुत्रक ॥ ३४ ॥ पुष्पाणि ब्रह्मवृक्षस्य संगृह्य च विचक्षणः ॥ सूक्ष्मचूर्णं ततः कृत्वा चातपे च विशोषयेत् ॥ ३५ ॥ एकविंशद्दिनं यावत् भक्षयेत्षष्टिकोदनम् ॥ भुक्त्वा तु च स मेधावी भोजयेच्च यथाक्रमम् ॥ ३६ ॥ खदिरस्य कषायेण तृषितस्तु जलं पिबेत् ॥ एकविंशतिरात्रेण श्रृणुवत्स यथाफलम् ॥ ३७ ॥ मत्तमातंगगामी च वायुवेगमहाबलः ॥ जीवेद्वर्षसहस्रं तु ब-

न्हिज्वालसमुद्युतिः ॥ ३८ ॥ सप्तमं कथितं वत्स चाष्टमं शृणु सांप्रतम् ॥ वल्कलं ब्रह्मवृक्षस्य सूक्ष्मचूर्णं तु कारयेत ॥ ३९ ॥ तच्चूर्णं तु समं ग्राह्यं गवां क्षीरेण यः पिबेत् ॥ पयसा स तु भुंजीयाल्लघ्वाहारो जितेंद्रियः ॥ ४० ॥ संवत्सरप्रयोगेण एवं भवति लक्षणम् ॥ तस्य मूत्रेण षण्मासाल्लोहं भवति कांचनम् ॥ ४१ ॥ शतवर्षसहस्राणि स जीवेन्नात्र संशयः ॥ अष्टमं कथितं वत्स नवमं शृणु सांप्रतम् ॥ ४२ ॥ ब्रह्मतैलं पलं ग्राह्य घृतेन सहितं पिबेत ॥ महायोगी भवत्प्र वो मूर्च्छा चैव प्रजायते ॥ ४३ ॥ क्षीराहारप्रयत्नेन मासमेकं पिबेन्नरः ॥ अदृश्यो जायते सोपि क्षिप्रं पश्यति मेदिनीम ॥ ४४ ॥ अग्निना दह्यमानोपि तस्य मृत्युर्न जायते ॥ दशवर्षसहस्राणि वलीपलितवर्जितः ॥ ४५ ॥ नवमं कथितं वत्स दशमं शृणु षण्मुख ॥ ब्रह्मतैलं मधुकृतं ब्राह्मीरससमन्वितम ॥ ४६ ॥ समभागानि सर्वाणि चोपभुंजीत साधकः ॥ मासत्रयप्रयोगेण दिवा पश्यति तारकम् ॥ ४७ ॥ षण्मासस्य प्रयोगेण सिद्धिर्भवति नान्यथा ॥ ब्रह्मकोटिसहस्राणि विष्णुकोटिशतानि च ॥ ४८ ॥ तैश्च तैः परावर्त्य तस्य मृत्युर्न जायते ॥ सत्यमेतत्समाख्यातं तव स्नेहेन पुत्रक ॥ ४९ ॥ गुह्य द्गुह्यतरं सारं साधकार्थमनुत्तमम् ॥ पलाशबीजचूर्णं तु प्रथमे चैव गृह्यते ॥ ५० ॥ श्रावणे वा भाद्रके द्विगुणस्य पचेत्पयः ॥ विश्राम्य दिनमेकं तु स जातं च भवेदपि ॥ ५१ ॥ दधिमंथप्रयत्नेन नवनीतं च गृह्यते ॥ समुद्धृत्य प्रयत्नेन यवान्नसहिताशनः ॥ ५२ ॥ भोजनं शालिभक्तेन गवां क्षीरेण संयुतम् ॥ सप्ताहं ब्रह्मचूर्णेन वलीपलितवर्जितः ॥ ५३ ॥ श्रुतिज्ञः सर्वतत्वज्ञो जीवेद्वर्षशतत्रयम् ॥ अयं ततोऽमयां कुर्यात्सप्तत्रयमेव च ॥ ५४ ॥ गोक्षीरशालिभुंजी स्यात्क्षीरान्नमपि वर्जयेत् ॥ सर्वेषामपि योगानां मुक्तो भवति कीर्तितः ॥ ५५ ॥ सर्पवृश्चिकदष्टस्य वानरादिकणोणवाः ॥ सर्वेषां विषकीटानां वानरी नश्यमेव च ॥ ५६ ॥ स्थावरं जंगमं वापि कृत्रिमं चापि यद्विषम् ॥ अजीर्णं विविधं भूतपुष्पं च मार्पिपासह ॥ ५७ ॥ वायुवेगे

विनश्यंति सर्वत्रविषनाशनम् ॥ ६ ॥ अथ कृष्णहरिद्राकल्पः ॥ आर्द्र-शुष्कं निशाचूर्णं शुष्कभांडोदरे स्थितम् ॥ तन्नष्टमात्रसूत्रेण गव्यं पीतं विशोधनम् ॥ १ ॥ सप्ताहं सेव्यमानस्य हन्यात्कुक्षिगतान् गदान् ॥ उष्णोदकेन तत्पानात् सप्ताहात् वीर्यवान् भवेत् ॥ २ ॥ शाल्यन्नं पयसाश्नीयात् यद्वा आज्येन नित्यशः ॥ निष्कमात्रं निशाचूर्णं मधुना सह लोलितम् ॥ ३ ॥ मासात् शशिककांतिः स्यात् द्विमासात्कमलप्रभः ॥ त्रिमासात्पित्तकारं च चतुर्मासैर्ज्वरादिभिः ॥ ४ ॥ विमुक्तः पंचमासाख्ये स्थिरयौवनवर्जितः ॥ षण्मासात्सूर्यसंकाशो सप्तमासान्मनोभवः ॥ ५ ॥ अष्टमे स्यात्प्रसन्नात्मा दूरश्रवणवान्नरः॥नवमासाद्गनायासं स्त्रीशतं चाधिरोहति ॥ ७ ॥ अनेकशास्त्रवेदी स्याद्दशमासनिषेवणात् ॥ मासादेकादशा-न्मर्त्यः सर्वज्ञत्वमवाप्नुयात् ॥ ७ । इदं तु वत्सरं यस्तु जरामरणवर्जितः ॥ क्षीराहारो भवेन्नित्यं हरिद्राचूर्णलोलुपः ॥ ८ ॥ अथ कटुरोहिणीकल्पः ॥ पुष्यार्के रोहिणीचूर्णं वारिणा सह सेवितम् ॥ ज्वरं हरति दुर्वारं भ्रमभंभ्रमकारकम् ॥ १ ॥ पाठा समन्विता कथित् स्याल्लाभे च विपा-चिकाः ॥ अष्टावशेषनद्वारं रात्रेः सर्वज्वरापहम् ॥ २ ॥ प्रभातकाले संपीता विरेचनकरी स्मृता ॥ पिप्पलत्यत्वचाकाष्ठे लेपाद्दाहज्वरं हरेत्॥३॥ तन्मूलमंबुना पीतं सर्वज्वरहरं नृणाम् ॥ तच्चूर्णं सूर्यदुग्धेन भावितं सेवितं यदि ॥ ४ ॥ तांबूले सेवितं चैकं मात्रा चैव वटीकृतम् ॥ द्वितीयकज्वरं हंति चातुर्थिकमथापि वा ॥ ५ ॥ कांजिकेन समायुक्ता समस्तविषना-शिनी ॥ वटवृक्षेण तन्मूलं कंठस्थं ज्वरनाशकृत् ॥ ६ ॥ शिवाबीरजटा कटेर मूलं संवेष्ट्य तंतुना ॥ सागरेण गले बध्वा सर्वरोगनिवारिणी ॥७॥ ८. अथाश्वगंधाकल्पः ॥ अश्वगंधारजः श्लक्ष्णं पयसा सह सेवितम् ॥ तिलात्तस्योर्ध्वेना चूर्णं गुडं च सहसंमितम् ॥ ८ ॥ कर्षमात्रं भवेन्नित्यं सर्वामयविशोधनम् ॥ धात्रीरसेन तच्चूर्णं कर्षं पिष्ट्वापि सेवितम् ॥ ९ ॥ दिव्यदृष्टिर्भवेज्जंतुर्जरामरणवर्जितः ॥ निष्कमात्रं हि तद्बीजं गुडुच्यात्वग्भवं रजः ॥ १० ॥ द्विनिष्कमात्रयुक्तोपि सायमुष्णेन वारिणा ॥ पीतं जयति

दुर्वारं नानाविधज्वरादिकम् ॥ ११ ॥ तच्चूर्णं नवनीतेन सेवितं रोमजादिकम् ॥ तच्चूर्णं तैललेपेन प्रणश्यंति त्वगामयाः ॥ १२ ॥ पलार्धमस्य चूर्णस्य तिलं तदद्विगुणं ततः ॥ कुडवं माषजं चूर्णमेतदाज्येन पाचितम् ॥ १३ ॥ अपूपान्भक्षयेन्मासं निदाघेन जरां जयेत् ॥ श्वेताश्वगंधमूलेन रक्षाबंधे कृते सति ॥ १४ ॥ दुर्बलोपि महाभारं वहेदक्लिष्टचेतनः ॥१५॥ भक्षोत्तमांगपरिकल्पितनामधेयं तत्पत्रपुष्पफलदंडसमूलचूर्णम् ॥ तक्रारनालपयसा मधुवारिणाज्यं षण्माससेवननरानजरामरत्वम् ॥ १६ ॥ ९. अर्कांकोलकल्पः ॥ सितारुणहरिद्वर्णै-रक्तै-रेव चतुर्विधैः ॥ अंकोलगुरुहस्तस्य मूलं पूर्वदिगाश्रितम् ॥ १७ ॥ कर्पूरमधुनालोड्य नेत्रयोरंजनं यदि ॥ दिवावसानेन तु ते नष्टद्रव्यावलोकनम् ॥ १८ ॥ एकविंशद्दिनं तस्य बीजं क्षौद्रसमन्वितम् ॥ भजंतं मानसं दृष्ट्वा सद्यः सर्पो मृतं नयेत् ॥ १९ ॥ तद्बीजचूर्णं मधुना पक्षचंद्रानिवातरे ॥ एकोपि सेवते मर्त्यो जरायुक्तो युवा भवेत् ॥ २० ॥ तत्तैलमर्दितम् सूतं बद्धत्वमवाप्नुयात् ॥ तन्निष्कमात्रं विन्यस्तं ताम्रमृत्कनकं भवेत् ॥ २१ ॥ कृष्णांकोलोस्थबीजानि चूर्णं चूर्णेन मर्दितम् ॥ श्लक्ष्णेनोत्तमकंठं च भाजनांतं प्रक्षेपयेत् ॥२२॥ तद्वृक्षे भाजनं नीत्वा न्यक्षिपेद्वालुसान्निधौ ॥ तेन प्रस्तारितं तैलं आदायांबुजतंतुभिः॥२३॥ लुसवर्त्योयुतं चैव दीपेन घृतकज्जलम् ॥ तत्कज्जलांजनं नेत्रे अदृश्यकरणं भवेत् ॥ २४ ॥ अरुणांकोलबीजस्य तैलं पूर्ववदाहरम् ॥ तेन प्रलिप्तताम्रस्य पत्राणि पुटपाकयोः ॥ २५ ॥ कालिकागंधनिर्मुक्तो निष्कमात्रसितासिता ॥ त्रिनिष्कमात्रस्वर्णेन स्वयं कनकतां व्रजेत्॥ २६ ॥ विमर्द्य पारदं तेन मुखायामवरोत्तरम् ॥ पुटीकृतं भवेत्तेन बंधते च रसं क्षणात् ॥ २७ ॥ १०. अथ शाल्मलीकल्पः ॥ सितासितारुणाहारिद्वर्णेन च चतुर्विधा ॥ वर्णं शामटशाल्मल्याश्चिलोहे परिवेष्टितम् ॥ २८ ॥ पात्रांतरगतं कुर्याददृश्यकरणं ध्रुवम् ॥ तन्मूलवल्कलं तैलं सितया सह सेवितम् ॥ २९ ॥ सप्ताहं तेन संसिद्धा षोडशाब्दायुषो भवेत् ॥ अनेकनारीरमणो दीर्घजीवी स्मरोपमः ॥ ३० ॥ तद्वृक्षरंध्रे नि-

क्षिप्य सरंध्रालोहनालकम् ॥ विन्यस्तभांडे तस्याधो दहेत्पुटगजाग्निना ॥ ३१ ॥ तन्निःसृतं हानिरसं मंडलं मधुना भवेत् ॥ अनेककामरूपीस्या- न्नानारूपं प्रविशयति ॥३२॥ अदृश्यत्वं स्वयं प्राप्य देवानां पुरतोपि वा ॥ तद्रसेन हतं तारं कृष्णवर्णमवाप्नुयात् ॥ ३३ ॥ त्रिवारं तद्रसाछिसं तत्पुष्पसमसंबितम् ॥ नीलीरसेन नेत्रस्थ अदृश्यं कुरुते नरम् ॥ ३४ ॥ तत्पुष्पं भृंगराजाभ्यां तैलमुत्पलकंदजम् ॥ पाचितं स्वशरीरे च केशपादा (विचेष्टितम् ? ) विलेपितम् ॥ ३५ ॥ सत्पाहासालितं हंति कपाले तलिंरंजनम् ॥ मूलेन श्वेतशाल्मल्या : कर्पूराहिममाक्षिकम् ॥ ३६ ॥ मधुना नेत्रयोर्न्यस्ता कदलीपत्रवेष्टवान् ॥ नष्टद्रव्यं विधानं वा भूगतं तेन पश्यति ॥ ३७ ॥ पुटं कृत्वा प्रयत्नेन यथा पूर्वमृषीरत । तस्मि- न्निःसृततैलेन पलं सूतस्य मर्दितम् ॥ ३८ ॥ लवंगं तु तया सार्धं वंगं संमतिसंभृतम् ॥ ससितं तद्द्रवं मूलं पयसा सह सेवितम् ॥ ३९ ॥ अनेकनारीरमणं करोति स्मरसन्निभम् ॥ तन्मूलं वाजिगंधाभ्यां युताभ्यां माषशर्करा ॥ ४० ॥ घृतेन शोभिना पूपानेकविंशद्दिने भवेत् ॥ नवना- गबली श्रीमान् आम्लक्षारमसेवयेत् ॥ ४१ ॥ प्रगल्भं कामिनीकंदं मदनिर्मथनः क्षमः ॥ हारितायाश्च शाल्मल्यः पूर्ववत्तैलमाहरेत् ॥ ४२ ॥ विद्रुतं रजतं तेन मापितं स्वर्णतां व्रजेत् ॥ आज्येन पीतं तत्तैलं दिव्यदे- ही भवेन्नरः ॥ ४३ ॥ तत्तैलं क्षौद्रसंयुक्तं सर्वरोगहरं नृणाम् ॥ आग- च्छत्यलगंधः स्यात्कनकद्युतिभास्करः ॥ ४४ ॥ तत्पुष्पस्वरसं पीतं बाला- र्ककरसंनिभम् ॥ कलाभिर्निखिलाभिश्च तत्पूर्णः सुभगो भवेत् ॥ ४५ ॥ अनेककालजीवी स्याद्भवने च यथा सुरः ॥ आदायारुणशाल्मल्यास्तरु- णांघ्रिभवं सरम् ॥ ४६ ॥ सिता क्षौद्ररसं पीतं कुर्याद्वज्रनिभं वपुः ॥ पूर्वजलमाहृत्य सक्षौद्रे तेन भावितम् ॥ ४७ ॥ युवातिवृद्धो भवति पतिताः पुनरुत्थिताः ॥ पुष्यार्के मधुना तस्याः प्रसूनजनितं रजः ॥ ४८ ॥ आज्येन सेवनं कुर्याद्वलं तद्वत्पराक्रमम् ॥ यः कोपि सेवते नित्यं शाल्मलीकल्पमुत्तमम् ॥ ४९ तस्य नश्यति दारिद्र्यं जरामरणवर्जि-

तम् ॥ ६. **अथ काकजंघाकल्पः** । काकजंघां समूलाग्रां पुष्ये सम्यक्समाहरेत् ॥ सिताश्वपुंखामूलेन सघृतं तद्रसं रजः ॥ १० ॥ षण्माससेवितं कर्ष सर्वशस्त्रनिवारणम् ॥ यावत् विण्मूत्रसंस्तंभस्तावद्यायाममेव वा ॥ ११ ॥ क्षीरेण पीतं तच्चूर्णं वज्रकायं करोति हि ॥ मंडलं सेवयेद्यस्तु वृद्धोऽपि तरुणो भवेत् ॥ १२ ॥ तच्चूर्णमीश्वरीमूत्रं गोधूमाघृतवेष्टितम् ॥ पटलेयं करोत्येव दिनेनैकेन मानवः ॥ १३ ॥ सोयं वज्रशरीरस्था दृष्टा शुद्धरिवापरः ॥ १४ ॥ ७. **अथ करककल्पः** ॥ करक इति उट्कटारी ॥ करकद्रुमपंचांगं सितया सह सेवितम् ॥ शरीरगतरोगघ्नं मधुनाहारसेवितम् ॥ १५ ॥ वारिणा तज्जटाचूर्णं क्षयापस्मारसेवितम् ॥ तस्योत्तरगतं मूलं सितादुग्धेन पुष्टिकृत् ॥ १६ ॥ सितेतरतिलोद्भूतं तन्मूलं रजसा सह ॥ सेवितं च निहत्याशु पांडुरोगं सुदुस्तरम् ॥ १७ ॥ गवांतरेण तन्मूत्रं चूर्णमाज्येन सेवितम् ॥ मंडलप्रमुखानन्कुष्ठ–दुष्टरोगव्रगं जयेत् ॥ १८ ॥ तैलेन तस्य पंचांगं चूर्णं सम्यक् व्रणापहं ॥ क्षीरेण पीतं तच्चूर्णं करके जननं स्मृतम ॥ १९ सितांबुस्पर्शनात्तस्य वेगः शीघ्रं निरुध्यते ॥ वेतालस्मरकोदंडमार्तंडग्रहनाशनम् ॥ ६० ॥ ८. **अथ निर्गुंडीकल्पः** ॥ निर्गुंडीमूलचूर्णं तु गवां सर्पिःपलाष्टकम् ॥ घृतं चैव तथा क्षौद्रं षोडशे क्षीरकं तथा ॥ ६१ ॥ स्निग्धभांडे समालोड्य धान्यराशौ निधापयेत् ॥ पूर्णे मासे ततोद्धृत्य सुदिने पुण्यसंयुते ॥ ६२ ॥ बिडालपदिकामात्रं मासमेकं प्रयोजयेत् ॥ वलीपलितनिर्मुक्तो जीवेद्वर्षशतत्रयम् ॥ ६३ ॥ निर्गुंडीमूलमादाय अजामूत्रेण यः पिबेत् ॥ नखदंतांश्च केशांश्च सप्तरात्रे पतंति च ॥ ६४ ॥ निर्गुंडीमूलमादाय तक्रेण सह सेवितम् ॥ मासमेक प्रयोगेण वलीपलितवर्जितः ॥ ६५ ॥ मासैकेन प्रयोगेण तैस्तैराकाशगामिनः ॥ ६६ ॥ निर्गुंडीमूलमादाय तिलतैलेन भक्षयेत् ॥ अस्थिगतानि कुष्ठानि नाशयेदेकमासतः ॥ पुष्यार्के ग्राहयेत्प्रातर्निर्गुंडीजां त्वचां शुभाम् ॥ शुष्कीकृत्वा विचूर्ण्याथ कर्षं कर्षं पिबेत्सदा ॥ ६८ ॥ अजामूत्रप्रयोगेण षण्मासादमरो भवेत् ॥ वर्षमात्रप्रयोगेण शिवतुल्यो भवेन्नरः ॥ ६९ ॥

तच्चूर्णार्धमिदं चाज्यैर्लिह्येत्स्यात्पूर्ववत्फलम् ॥ तच्चूर्णं त्रिफलामुंडीभृंगी-
निंबगुडूचिकाः ॥ ७० वचाशेषसमं चूर्णं मध्वाज्याभ्यां लिहेत्फलम् ॥
गुडपक्वक्रमापन्नं पीत्वा चातिविरेचकृत् ॥ ७१ ॥ निर्यातक्रमशक्तस्थमुख-
दंताक्षिकर्णजः ॥ राजयक्ष्मादिरोगांश्च सप्ताहेन विनाशयेत् ॥ ७२ ॥
मासत्रयाज्जरां हंति नविंद्वर्षशतत्रयम् ॥ अथ भक्षणमंत्रः ॐ मायात्म.
गणपतये कुरु स्वाहा ॥ इति भक्षणमंत्रः ॥ निर्गुंडीमूलमाहृत्य छायाशुष्क-
विचूर्णितम् ॥ सप्ताहं गोजलेनोक्तं हंति सर्वत्र चामयम् ॥ ७३ ॥ अजा-
मूत्रेण संपीत्वा सप्ताहं तद्भवं रजः ॥ नखकेशाद्विजानि च प्रच्यंति वि-
तनोति हि ॥ ७४ ॥ पुनः सप्तदिनादूर्ध्वं दिव्यदेहो भवेन्नरः ॥ वन्हि-
तोयभयं नास्ति पुनः सप्ताहसेवया ॥ ७५ ॥ हस्तार्कस्येंदुवारस्य मूलं
चोदग्गतं हरेत् ॥ स्पर्शेन बंधविच्छेदं कुरुते शीघ्रमद्भुतम् ॥ ७६ ॥
९. अथेंद्रवारुणीकल्पः ॥ इंद्रवारुणिकामूलं कांजिकेन निपेवितम ॥
स्थावरं जंगमं हन्यात् विषभूतग्रहादिकम् ॥ ७७ ॥ बिल्वपत्रयुतं तस्य
न तद्ग्रहविमोचनम् ॥ तज्जलं पयसा पीतं [illegible]पुत्रप्रदं जगुः ॥ ७८ ॥
इंद्रवारुणिकामूलं पुष्ये लग्न समुद्धरेत् ॥ कालत्रये गवां क्षीरैः पिष्ट्वा तद्वा-
लर्काकृतम् ॥ ७९ ॥ चंदनेन समायुक्तं छायाशुष्कं तु कारयेत् ॥ ललाटे
तिलकं कृत्वा नृणां वश्यकरं परम् ॥ ८० ॥ च्यूषणं च गवां क्षीरे
पक्त्वा कुर्यादृढां दृढाम् ॥ छायाशुष्कां स्थिता वक्त्रे वीर्यस्तंभकरं नृणाम्
॥ ८१ ॥ अथ भृंगराजकल्पः ॥ पुष्ययोगेन संग्राह्य भृंगराजस्य मूलकम्
॥ आतपे शोषयित्वा तु सूक्ष्मचूर्णं तु कारयेत् ॥ ८२ ॥ आरनाले समा-
लोड्य पुष्यार्केण तु सेवयेत् ॥ बिडालपदमात्रं तु परिहारो न विद्यते
॥ ८३ ॥ तैलान्वित न लीढ्वा तु जरया नाभिभूयते ॥ एकमासप्रयोगेण
सर्वरोगान् विनाशयेत् ॥ ८४ ॥ ततो मासद्वितीयेन सर्वश्रुतिधरो भवेत् ॥
चतुर्मासप्रयोगेण किन्नरैः सह गीयते ॥ ८५ ॥ पंचमे काव्यकर्ता च
षष्ठे काककुलिर्भवेत् ॥ सप्तमे परिवर्तंते नखाःकेशाः पुनर्भवेत् ॥ ८६ ॥
नवमासप्रयोगेण सर्वभूतानि पश्यति ॥ दशमासप्रयोगेण जीवेद्वर्षशतत्रयम्

॥ ८७ ॥ संवत्सरप्रयोगेण सहस्रायुर्भवेन्नरः ॥ कूष्मांडं कारवल्ली च धानकं सर्षपं तथा ॥ ८८ ॥ वर्जयेद्बुद्धिमान्सर्वं सेव्यमानो रसायने ॥ तद्रसं त्रिफलाचूर्णं भावितं पलितापहम् ॥ ८९ ॥ त्रिपक्षमात्रं जंतूनां नात्र कार्या विचारणा ॥ काकमाचीरसं भृंगरसेन सह भावितात् ॥ ९० ॥ द्वादशाहाद्भवेज्जंतोः पलितस्तंभनं परम् ॥ ११. अथ त्रिफलाकल्पः ॥ त्रिनिष्कमात्रा अभया षण्मितं च बिभीतकम् ॥ धात्री द्वादशनिष्कास्त्वेवं त्रिफलासूक्ष्मचूर्णितम् ॥ ९१ ॥ चूर्णं विडंगखदिरभृंगराजभवांबुभिः ॥ पलेन तत्सप्तभाव्यं मासमात्रनिषेवणात् ॥ ९२ ॥ वलीपलितनिर्मुक्तो षण्मासाद्दिव्यदेहता ॥ इति संवत्सराभ्यासात्सहस्रायुर्भवेन्नरः ॥ ९३ ॥ अथान्यच्च ॥ हरीतक्यास्त्रयो भागा धात्र्या द्वादशभागकाः ॥ षड्भागाश्च बिभीतस्य त्रिफलैकं प्रकीर्तिता ॥ ९४ ॥ खदिरस्याभयः सप्तरात्रं भृंगरसेन वा ॥ विडंगपयसा सम सप्तवज्ररसेन वा ॥ ९५ ॥ त्रिफला भावयेदित्थं भक्षयेच्छर्करासमम् ॥ वलीपलितनिर्मुक्तः सर्वरोगैः प्रमुच्यते ॥ ९६ ॥ १२. अथ मुसलीकल्पः ॥ क्षौद्रेण मुसलीकंदं सेवितं ज्वरनाशिनी ॥ गोमूत्रेण ज्वरस्तस्य संततज्वरवेगनुत् ॥ ९७ ॥ उष्णोदकेन तच्चूर्णं शूलघ्नं शांतिभेवितम् ॥ जंबूरसेन संपीतं मुसलीकामलापहम् ॥ ९८ ॥ तद्रजः कांजिकापीतं सद्यः कुक्षिरुजापहम् ॥ तृतीयं च ज्वरं हन्याद्वारिणां कदलीरजः ॥ ९९ ॥ क्षीरेण पीता सा हन्याद्दक्षोरुक्कृष्णकाय च ॥ अपामार्गयुता पीता वाजिशां तें प्रयच्छति ॥ १०० ॥ घृतेन सहितं तस्याश्चूर्णं वीर्यविवर्धनम् ॥ नारिकेलांबुना पीतं शिरोविस्फूर्तिनाशनम् ॥ १ ॥ तिलतैलेन तच्चूर्णं हन्याच्छ्लेष्मयुतान् गदान् ॥ दुवनस्यरसापीतं पांडुरीजयसुंदरी ॥ २ ॥ सुरणे पोषणं तस्य रुजान् हन्याद्गुदामयम् ॥ आर्द्रकस्य रसं पीतं तच्चूर्णं शूलवेगजित् ॥ ३ ॥ कवचंफलसारेण जलोदरगदं जयेत ॥ तच्चूर्णं सैंधवोपेतं दुष्टव्रणशोषणम् ॥ ४ ॥ जीर्णज्वरगतान् रोगान् पिप्पलीसहिता हरेत् ॥ लक्ष्मणामूलसंयुक्ता ऋतुस्नाता पिबेद्यदि ॥ ५ ॥ कामिनीकदलीकंदं वंध्यापि लभते सुतम् ॥ सवचा क-

ल्कली कुर्यात् मूलं वाचस्पतिर्यथा ॥ ६ ॥ भृंगराजरसोपेत दुष्टमारुतनाशिनी ॥ सेविता भूशिरीषेण जरामरणनाशिनी ॥ ७ ॥ तक्रेणालोड्य संपीता पांडुव्याधिनिगकरी ॥ निर्गुंडीसारसहिता वज्रकायप्रदायिनी ॥ ८ ॥ अजामूत्रेण संपीता वलीपलितवारणम् ॥ नारिकेलांबुना पीता मुसली विषनाशिनी ॥ ९ ॥ कालदष्टमथो हन्या पटोलेन युता यदि ॥ मातुलुंगरसोपेतं तद्वजं कुक्षिरोगजित् ॥ १० ॥ मूलं तस्याः समुद्धृत्य छायाशुष्कं तु चूर्णितम् ॥ मधुसर्पियुतं भुक्तं देहशुद्धौ शुभे दिने ॥ ११॥ जीर्णे क्षीरेण भोक्तव्यं वातुलानि विवर्जयेत् ॥ वलीपलितनिर्मुक्तो मासयोगेन मानवः ॥ १२ ॥ घृतेन मधुना भुक्ता सर्वकुष्ठविनाशिनी ॥ स्वर्णपुष्पी तथा गौरी नाराची कुष्टशोषिणी ॥ १३ ॥ एतैः खर्जूरपत्राख्यैर्मडली नाम कीर्तिता ॥ १४ ॥ १३. अथ मुंडीकल्पः ॥ सुरासुरैस्तूयमाना या मुंडी त्रिविधा स्मृता ॥ सिता रक्तासिता चेति सत्वराजसतामसैः ॥ १५ ॥ गुणैरेतैः क्रमाव्द्यातां कथयामास तं शिवे ॥शुक्लपक्षेथ पंचम्यां पौर्णमास्यां समाहितः ॥ १६ ॥ रेवतीरोहिणीपुष्यश्रवणार्के द्विजैस्तथा ॥ अभ्यर्च्य गंधपुष्पाद्यैः समूलां तां समाचरेत् ॥ १७ ॥ तच्चूर्णसेवनात्सप्तरात्रौ शारीरवान्भवेत् ॥त्रिसप्ताद्विदिवसेव्यान्नमरत्वमवाप्नुयात्॥१८॥ छायाशुष्कं च तच्चूर्णं कर्षगोपयसा सह ॥ वर्षैकेन रुजं हंति जीवेद्वर्षशतत्रयम् ॥ १९ ॥ अथ ग्रहणमंत्रः ॥ ॐ नमो भगवते अमृतोद्भवाय अमृतं कुरुते स्वाहा ॥ भिक्षोत्तमांगपरिकल्पितनामधेयंस्तत्पत्रपुष्पफलदंडसमूलचूर्णम ॥ तक्रारनालपयसा मधुवारिणाज्यैः षण्माससेवितनरेत्वमरामरत्वम् ॥२०॥ १३. अथ चित्रककल्पः धन्वंतारिरुवाच ॥ अथातः संप्रवक्ष्यामि चित्रकं कल्पमुत्तमम् ॥ यस्य भक्षणमात्रेण जरामृत्युविनाशनम् ॥ २१ ॥ नास्ति तेन समं किंचित् पृथिव्यास्तलमंडले ॥ त्रिविधं चित्रकं वर्ज्यं कृमिक्षीपरिपीडितम् ॥ २२ ॥ ग्रामांते वा स्मशाने वा वाल्मिके वा चतुष्पथे ॥ समीपे वा गृहे द्वारे चित्रकं वर्द्धयेत्सदा ॥ २३ ॥ सूचिपत्रमुखश्रेष्ठं तथा मंडलपत्रकम् ॥ उभेति पत्रकं ग्राह्यं

मृचिमंडलपत्रके ॥ २४ ॥ कार्तिक्यां मार्गशीर्षे वा उद्धरेत्तु विचक्षणः ॥ गजायुतसहस्राणां वेगश्चातिधरो भवेत् ॥ २५ ॥ द्विकमासप्रयोगेण दृढकायो जितेंद्रियः ॥ चित्रकं मासमेकं तु तक्रेण सह यः पिबेत ॥ २६ ॥ नश्यंति व्याधयः सर्वे कामदेवोपमो भवेत् ॥ क्षीरेण माममेकं तु चित्रकं भक्षयेन्नरः ॥ २७ ॥ वज्रदेही महाकायो महाबलपराक्रमः ॥ **योगरत्नावल्याम्** ॥ समूलपत्रमुत्पाट्य छायाशुष्कं तु कारयेत ॥ २८ ॥ कटुत्रयेण सयुक्तं घृतेन मधुना सह ॥ चित्रकं भक्षयेत्प्राज्ञो बिडालपदमात्रकम्॥२९॥ षण्मासयोगतो मानी वलीपलितवर्जितः ॥ पांडुरोगमपस्मारं जलोदरभगंदरम् ॥३०॥ अशेषमेहनं कुष्टं हंति वन्हेर्निषेवणात् ॥ चित्रकं मासमेकं तु गोमूत्रेण तु यः पिबेत् ॥ ३१ ॥ समस्तव्याधिशमनं रूपवाँश्च न संशयः ॥ चित्रकं मासमेकं तु मधुना सह यः पिबेत् ॥ ३२ ॥ मेधावी सर्वे संपन्नः सत्यवाक् प्रियदर्शनः ॥ जीवेद्वर्षशतं साग्रं वलीपलितवर्जितम् ॥ ॥ ३३ ॥ एतत्तु कथितं ब्रह्मन् चित्रकाख्यं रसायनम् ॥ अहोरात्रोषितो भूत्वा पूजा कृत्वा विधानतः॥३४॥रक्तांबरधरो मौनि रक्तगंधानुलेपनः ॥ रक्तमाल्याभरक्तोसौ बलिं दद्याद्विचक्षणः ॥ ३५ ॥कृष्णाष्टम्यां चतुर्दश्यां त्वाष्टे ऋक्षे च पंचमी ॥ चंद्रताराबलं चैव मंत्रेणानेन मंत्रवित् ॥ ३६ ॥ ॐ छिधिचित्राय स्वाह ॥ अनेनैव तु मंत्रेण गंधमाल्यानुलेपनम् ॥ बलिं दद्यात्पुनर्मंत्रं मंत्रमेतमुदीरयेत् ॥ ३७ ॥ ॐ सत्यवतीत्रिषु महौषधे मा चलः समय हुं फट् स्वाहा ॥ समूलपत्रमुत्पाट्य छायाशुष्कं तु कारयेत् ॥ सूक्ष्मचूर्णं ततः कृत्वा घृतेन मधुना सह ॥ ३८ ॥ कटुत्रयसमायुक्तं बिडालपदमात्रकम् ॥ सप्ताहं भक्षयेत्प्राज्ञः क्षीरसेवी जितेंद्रियः ॥३९॥ वर्षपंचशतंजीवी वलीपलितवर्जितः ॥ संवत्सरप्रयोगेण सहस्रायुर्भवेन्नरः॥४०॥ प्रमदाशतगामी स्यादक्षीणबलयौवनः ॥ द्विरष्टवर्षकायोसौ कंदर्प इव रूपवान् ॥ ४१ ॥ तनुं सिंहबलोपेतां धने वै श्रवणोपमः ॥ सततं भक्षये द्यस्तु स रुद्रो-रवितेजवत् ॥ ४२ ॥ जरामृत्युविनिर्मुक्तो चित्रकस्य प्रभावतः ॥ रक्तचित्रकचूर्णेन नस्यं दद्यात्त्रिभिः त्रिभिः ॥ ४३ ॥ सर्वदोषवि-

निर्मुक्तः स्तंभमायाति तत्क्षणात् ॥ रक्तचित्रक भल्लाततैश्च लिप्तं पुटेन तु ॥
॥ ४४ ॥ चित्रार्कपत्रदेवेशी जायते हेमसेवनम् ॥ १४ ॥ अथ मंडूककल्पः ॥ महानद्यां समुद्रे वा देवखाते महा–ह्रदे ॥ दशपुरुषमधस्तात्तु मंडूकानां वसेद्द्वयम् ॥ सर्ववर्णे अतिस्थूलो दीर्घजीवी बिलेशयः ॥ शरत्काले तु निर्गत्य वसेदन्यत्र सर्वदा ॥ ४६ ॥ तस्य मूर्ध्नि महारत्नं विषनाशनकीर्तितम् ॥ एतत्संगृह्य तां न्हणां नास्ति मृत्युदरिद्रता ॥ ४७ ॥
यत्र कोशे भवेद्रत्नं तत्र संपत्ति तिष्ठति॥तत्पृष्ठोदकसंसेकान्नश्यते दशधा विषम् ॥ ४८ ॥ वातगुल्मोदरार्तिश्च नेत्रशूलादिकं रुजम् ॥ नश्यंति स्पर्शमात्रेण स्पृष्ट्वा वा तैलसेवनात् ॥ ४९ ॥ ॥ १५ ॥ अथ श्रीफलकल्पः ॥ बिल्वबीजानि संगृह्य सूक्ष्मचूर्णानि कारयेत् ॥ त्रिफलाक्काथतोयेन सप्तवाराणि भावयेत् ॥ ५० ॥ ततो यंत्रेण निष्पीड्य तैलं गृह्य सुसंयुतः ॥ स्निग्ध भांडे विनिक्षिप्य भूमौ तत्तु निधापयेत् ॥ ५१ ॥ मासमेकं ततो द्धृत्य रक्षां कुर्याद्विधानतः ॥ विरेचवमनं कृत्वा शुद्धकोष्ठे शुभे दिने ॥ ५२ ॥ कृष्णाष्टम्यां चतुर्दश्यां पुष्ययोगेन बुद्धिमान् ॥ निवासमंदिरे तैलं कर्षमात्रं पिबेन्नरः ॥ ५३ ॥
जीर्णांते भोजनं कुर्यात् शाल्योदनपयोयुतम् ॥ दिवसैकेन मेधावी बार्याधीध्यविनाशनम् ॥ ५४ ॥ द्विदिनेन विनश्यंति सर्वरोगा न संशयः ॥ चतुर्थे दिवसे ग्रंथसहस्राणि च धारयेत् ॥ ५५ ॥ पंचमे दिवसे चैव तथा सारस्वतो भवेत् ॥ षष्ठे च दिवसे प्राज्ञो ब्रह्मतुल्यो भवेन्नरः ॥ ५६ ॥
सप्तमे दिवसे चैव सर्वज्ञः प्रियदर्शनः ॥ श्रुतिज्ञः सुगमः श्रीमान् कर्णिकारसमद्युतिः ॥ ५७ ॥ वलीपलितनिर्मुक्तो जीवेद्वर्षसहस्रकम् ॥ सत्याभिमंत्रितं कृत्वा पश्चात्तैलं पिबेन्नरः ॥ ५८ ॥ मनुः ॐ नमो वीरजननी स्वाहा ॥ १६. अथ लांगलीयोवत्सनागली कल्पः ॥ अथातः संप्रवक्ष्यामि लांगलीकल्पमुत्तमम् ॥ लांगली नाम विख्याता ओषधी चोत्तमोत्तमा ॥ ५९ ॥ तस्या मूलं तु संग्राह्य गंधकं च तथैव च ॥ रसेन सहितं चैव ताम्रपत्राणि लेपयेत् ॥ ६० ॥ मुखप्रसवनं कुर्यात् प्रशस्त-

मिवमौषधम् ॥ जलेन लांगलीकंदं पिष्ट्वा हस्ते प्रलेपयेत् ॥ ६१ ॥
हस्तेन स्त्रीकरं स्पृष्ट्वा द्रवेद्वाहिहुतं यथा ॥ सर्वेषां द्रावयोगानां मंत्रराजं
शिवोदितम् ॥ ६२ ॥ अष्टोत्तरशतं जप्त्वा तद्योगस्य सुसिद्धये ॥ ॐ
नमो भगवते उड्डामेश्वराय स्त्रीणां भगदर्पं पातय स्वाहा हर ठठः ॥
करतलोत्पादिति लांगलीकंदलिप्तसकलगात्रः युद्धे भीमसेनस्यापि दर्पं ह-
रति ॥ १७ अथ देवदालीकल्पः ॥ देवदालीफलं क्षीरं मासमात्रं
मधुघृतम् ॥ अंगलेपो निकुसुमं लेपनाद्द्रावणं भवेत् ॥ ६३ ॥ समूलफल-
मात्राणां सूक्ष्मचूर्णं विधाय च ॥ पिबेदुष्णेन तोयेन मात्रं मार्जारपादि-
कम् ॥ ६४ ॥ प्लीहं भगंदरं वातं गुल्मकाहलमद्भुतम् ॥ हंति गोमू-
त्रपीतां च सर्वकुष्ठानि देहिनाम् ॥ ६५ ॥ देवदालीरसो गंधं पाषाणेन
समन्वितम् ॥ द्रावयेत्सर्वलोहानि पारदस्यापि बंधकृत् ॥ ६६ ॥ १८.
अथ रक्तगुंजाकल्पः ॥ पुष्यार्केण समुद्धृत्य तन्मूलं तु विचक्षणः ॥
सर्पदष्टस्तु लेपेन निर्विषो भवति क्षणात् ॥ ६७ ॥ तन्मूलं तु मुखे
क्षिप्य साभामध्ये विशेन्नरः ॥ सदुष्टमुखतस्तंभो मतिस्तंभं च विद्यते ॥
॥ ६८ ॥ तन्मूलौ तु कटौ बध्वा मूढगर्भः प्रसूयते ॥ तस्य मूलं तु संगृह्य
आत्मपंचमलैः सह ॥ ६९ ॥ यस्य पानेन दीयंते स वश्यो भवति ध्रुवम्
॥ तमेवमूलं बृहतीफलं च मधुना सह ॥ ७० ॥ तल्लिंगलेपनं कुर्याद्द्रावणं
मोहनं वशम् ॥ तन्मूलं तु गले बध्वा कृमिनाशं करोति हि ॥ ७१ ॥
तन्मूललेपमात्रेण नाडीव्रणविशोधनम् ॥ तस्य मूलं समुद्धृत्य आत्मशुक्रेण
भावयेत् ॥ ७२ ॥ यस्यै प्रदीयते भोक्तुं सा वश्या भवति ध्रुवम् ॥
तन्मूलं तु कटे बध्वा सर्वग्रहविनाशनम् ॥ ७३ ॥ गुंजाफलश्लक्ष्णपिष्टं
लेपयेत्काष्ठपादुकाम् ॥ विनाविघ्नं नरो गच्छेत्क्रोशमात्रं न संशयः ॥ ७४ ॥
लघुदारुमयं पीठं गुंजापिष्टेन लेपयेत् ॥ शुक्रमेतज्जलेशानमुपातिष्ठंतमुच्यते
॥ ७५ ॥ गुंजाबीजं त्वचोन्मुक्तं चूर्णं भाव्यं नृमूत्रकैः ॥ सप्ताहं तु पुनः
कांस्यपात्रे घर्मे समुद्धरेत् ॥ ७६ ॥ तैलमादाय तल्लिप्तं पूर्ववत्पादुका-
मति ॥ अक्षपत्ररसैः पिष्टं गुंजामूलं दिनाष्टके ॥ अंजिताक्षो नरः पश्ये

पिशाचानातिकौतुकम् ॥ श्वेतगुंजारसैश्चाहं सितसूत्रं विभावयेत् ॥ ७७ ॥ तत्सूत्रवर्तिकादीपं ततः प्रगृह्य कज्जलम् ॥ तेनांजितो नरश्चित्रं दिवा पश्यति तारकम् ॥ ७८ ॥ मूलं तु श्वेतगुंजाया ऋक्षे उत्तरभावयेत् ॥ उत्तराभिमुखो ग्राह्यं बाणस्तंभकरं मुखम् ॥ ७९ ॥ श्वेतगुंजारसेनैव सर्वांगे लेपमाचरेत् ॥ अंगारराशिमध्यस्थो भ्राम्यमाणो न दह्यते ॥ ॥ ८० ॥ मनुः ॐ वज्रकारिणे अमृतं कुरु स्वाहा ॥ मूलं सुश्वेत-गुंजाया मंत्रयंत्रविनिक्षिपेत् ॥ ८१ ॥ काष्ठभारशतेनापि अन्नपाको न जायते ॥ मनुः ॐ नमो महामाये वन्हि रक्ष स्वाहा ॥ मूलं तु श्वेतगुंजाया कुसुंभरसपेषितम् ॥ तेनैव रंजयेद्वस्त्रं तद्वस्त्रं स्वांगवेष्टितम् ॥ ८२ ॥ गंभारजलमध्ये तु यावदिच्छति तिष्ठति ॥ जलस्तंभमिदं ख्यातं गुंजामंत्रेण मंत्रितम् ॥ ८३ ॥ ॐ नमो भगवते रुद्राय जलं स्तंभय ठः ठः ठः ॥ पुष्यार्के श्वेतगुंजाया विधिना मूलमुद्धरेत् ॥ मुखाक्षिनीरैः संपिष्ट्वा मधुना सह चांजयेत् ॥ ८४ ॥ आंजिताक्षो नरस्तेन निधिं पश्यति तारकम् ॥ १९. अथ मंडूकब्राह्मीकल्पः ॥ शुक्लपक्षे तु संगृह्य पुष्यनक्षत्रसंयुते ॥ ८५ ॥ समूलपत्रमुत्पाट्य सूक्ष्मचूर्णं तु कारयेत् ॥ सप्तरात्रप्रयोगेण कुक्षिरोगं विनाशयेत् ॥ ८६ ॥ सप्तसप्तप्रयोगेण वज्रकायो भवेन्नरः ॥ सर्वरोगविनिर्मुक्तो कामदेव इवापरः ॥ ८७ ॥ क्षीरेण पिबते मासं सर्वरोगनिवारणम् ॥ मासद्वयप्रयोगेण निधानानि तु पश्यति ॥ ८८ ॥ अदृश्यश्च त्रिभिर्मासैर्भवत्येव न संशयः ॥ चतुर्मासेन पश्यंति विमानानमराहितान् ॥ ८९ ॥ षण्मासस्य प्रयोगेण खेचरत्वं च जायते ॥ संवत्सरप्रयोगेण द्वितीय इव शंकरः ॥ ९० ॥ अस्यौषधस्य सं-योज्यं पिशाचा राक्षसादयः ॥ तस्य कर्मप्रयोगेण वंध्या पुत्रवती भवेत् ॥ ९१ ॥ समूलपत्रां संगृह्य मध्वाज्यः सह भक्षयेत् ॥ जलोदरं तु यावंतं गुल्मशूलं प्रणश्यति ॥ ९२ ॥ कुष्टं भगंदरश्चैव श्वासकासजलापहम् ॥ अथ मनुः ॥ ॐ अमृतोद्भवाय अमृतं कुरु ॥ अनेन मंत्रेणाभिमंत्रयित्वा भक्षयेत् ॥ ९३ ॥ मंडूकब्राह्मी संगृह्य शुक्लपक्षे शुभे दिने ॥ पत्रमूलानि

ताः शोष्या श्छायायां कृतचूर्णकम् ॥ ९४ ॥ भक्षयेत्तु गवां क्षीरे सर्वरोग-
प्रणाशनम् ॥ २० अथ बंदाककल्पः। संगृह्य द्रुमबंदाख्यं हस्ते धारण-
मात्रतः ॥ नारी नरेंद्रो वश्यः स्यात्सर्वसंमोहकारकम् ॥९५॥ विशाखायां
समुद्धृत्य बंदाकं राजवृक्षकम् ॥ धारयेन्न च गेहस्ते वैश्वानरभवं भयम्
॥ ९६ ॥ रोहिण्यां वटबंदाकं करस्थं वर्यविवर्द्धनम् ॥ अश्वत्थभवबंदाकं
रेवत्यां रोगनाशनम् ॥ ९७ ॥ निर्गुंडीभवबंदाकं भरण्यां पीतमात्रतः ॥
क्षीरेण सह तत्सद्यो नृणां बुद्धिकरं परम् ॥ ९८ ॥ सौम्यार्के भूतबंदाक-
मशेषजनमोहनम् ॥ विषवृक्षस्य बंदाकं पूर्वाषाढाऋक्षं यदि ॥ ९९ ॥
संप्रलिप्त ततो भूपविषादादिप्रभाषणम् ॥ उत्तराषाढनक्षत्रे बंदाकविषवृक्ष-
जम् ॥ १०० ॥ मूलिका तद्गतं कुर्यात् हस्ते कृत्वाथ धारणम् ॥ विषं
स्थावरजं पीडा जंगमं न भविष्यति ॥ १ ॥ मधुवृक्षस्य बंदाकं धान्यस्थं
धान्यवृद्धिदम् ॥ पलाशतरुबंदाकं नित्यं क्षीरेण सेवितम् ॥ २ ॥ मध्यस्य
नाशनं कुर्यातधूमकेतुरिवापरः ॥ अंकोलभवबंदाकं धान्यस्थं धान्यवृ-
द्धिकम् ॥ ३ ॥ वश्यार्थं निंबबंदाकं गृहांतरगतं यदि ॥ वश्यं करोति
ह्याश्चर्यमाजन्ममरणांतकं ॥ बदरीवृक्षबंदाकं कुष्ठजित्क्षीरसेवितम् ॥ ४ ॥
धात्रीवृक्षरुहोद्भूतं बंदाकं बाहुपाशगम् ॥ जहत्यहर्निशं काले कलिनिर्मूल-
कारणम् ॥ ५ ॥ आशामारविबंदाकं द्यूतं जयति हस्तगम् ॥ चित्रमूल-
जबंदाकं कुसुमात्रेण सर्वजित् ॥ ६ ॥ जंबूबंदाकजं चूर्णं तक्रपीतं विषं
हरेत् ॥ हस्तगं च जयेद्युद्धं कलहं च विशेषतः ॥ ७ ॥ पुष्ये तिंदुकबंदा-
कमादायाथ वनांतरे ॥ क्षिप्तं तदसिधारां हि स्तंभयत्यंगपानतो ॥ ८ ॥
उत्तराद्रिकशम्याकं बंदादिमपि शूलकम् ॥ आदाय स्थितयस्थित्यं क्षिप्तं
पाकगृहे परे ॥ ९ ॥ अवश्यं कुरुते मर्त्यं यावज्जीवमिदं भवेत् ॥
२१. अथ बाकुचाकल्पः ॥ बाकुची त्रिफलाव्योषकृशानुचिरबिल्वकम् ॥
निंबबंदाकसहितं समं गोमूत्रपेषितम् ॥ १० अष्टादशविधं कुष्ठं निर्मू-
लयति तत्क्षणात् ॥ बाकुचीतिनिकैः सार्द्धं हिंगुसिंदूरपारदैः ॥ ११ ॥
उष्णोदकेन संपीतं सर्वकुष्ठापहं जगुः ॥ तच्चूर्णं व्योषदेवदासितारत्नमि-

वानलः ॥ १२ ॥ उष्णोदकेषु तच्चूर्णं सव्योषं शुक्रवेगजित् ॥ सगुडं बाकुचीचूर्णं सेवितं वातनाशनम् ॥ १३ ॥ २२. अथ रुदंतीकल्पः ॥ रुदंती च जरात्पूर्वं जरया जुरतीकृतः ॥ मयि च विद्यमानायां कथं क्लिश्यंति जंतवः ॥ १४ ॥ रुदंती नाम विख्याता जराव्याधिविनाशिनी ॥ चणपत्रोपमैः पत्रैर्युक्तांभोबिंदुवर्षिणी ॥ १५ ॥ चतुर्विधा च सा ज्ञेया पीता रक्ता सितासिता ॥ तानौषधीं समासाद्य शुक्लपक्षे शुभे दिने ॥ १६ ॥ छायाशुष्कां च तां कृत्वा भक्षयेन्नियतेंद्रियः ॥ विरेचभवनं कृत्वा बिडालपदमात्रया ॥ १७ ॥ भक्षयेन्मधुसर्पिर्भ्यां मासमेकं महौषधम् ॥ जीर्णाते भोजनं कुर्याद्दुग्धभक्तं नरो जहि ॥ १८ ॥ दृढकायोऽतितेजस्वी सर्वरोगैः प्रमुच्यते ॥ वलीपलितनिर्मुक्तो परमायुस्ततो भवेत् ॥ ॥ १९ ॥ सूक्ष्मचूर्णं ततः कृत्वा स्थापयेत्कटुतुंबके ॥ कर्षमात्रप्रमाणेन पथ्यभोजी शुभे दिने ॥ २० ॥ मधुसर्पिः समालोड्य कृष्णाभोक्षीरभोजनम् ॥ षण्मासस्य प्रयोगेण वज्रकायो भवेन्नरः ॥ २१ ॥ पंचांगं भक्षयेद्यस्तु सर्वरोगं निवारयेत् ॥ बिडालपदमात्रं तु मधुसर्पिसमन्वितम् ॥ ॥ २२ ॥ जविद्वर्षशत पंचवलीपलितवर्जितम् ॥ पाने लेपे तथा नस्ये विषं हंति च भक्षणात् ॥ २३ ॥ रुदंतीमूलचूर्णं तु पिबेडं संवत्सरं विषम् ॥ टंकणं तगरं कृष्णलेहनाद्रावणं परम् ॥ २४ ॥ मूलं सैंध्येन गंताय भावयेच्च यथेच्छया ॥ २३ अथ पालेयकल्पः ॥ एरंडसदृशैः पत्रैः फलैश्चवतु तादृशैः ॥ २५ ॥ तस्य योगं प्रवक्ष्यामि सर्वसंचयनाशनम् ॥ तस्य पत्ररसं गृह्य पारदाभ्रकमिश्रितम् ॥ २६ ॥ एकरात्रं मर्दयैव पिंडी भवति तत्क्षणात् ॥ धाम्यमानेन तस्थेन बद्धो भवति सूतकः ॥ २७ ॥ तस्य कंदं समादाय कृत्वा खंडानि पाचयेत् ॥ यामैकं माहिषक्षीरे श्छायायां शोषयेत्ततः ॥ २८ ॥ कर्षैकं भक्षयेन्नित्यं क्षुत्पिपासाहरं भवेत् ॥ सिद्धयोगमिदं ख्यातं पुरा नागार्जुनोदितम् ॥ २९ ॥ अथ मंत्रः ॥ ॐ नमो भगवते अमृतार्णवमध्यसंस्थिताय मम शरीरे अमृतं कुरु स्वाहा ॥ **२४. अथ पंचांगनिंबकल्पः** ॥ पुष्यकाले तु संगृह्य फलकाले फलानि

च ॥ संगृह्य च प्रयत्नेन मूलं पत्रं त्वचा तथा ॥ ३० ॥ छायाशुष्कं तु तच्चूर्णं भावयेत्खदिरांबुना ॥ चित्रकोथ विडंगानि व्याधिमात्रकसंज्ञकः ॥ ३१॥ भल्लातकहरीतक्याधात्रीगोक्षीरसंयुतः कासमर्दकबीजानि पिप्पली मरिचापि च ॥ ३२ ॥ द्वे हरिद्रे लोहचूर्णं संयुक्तो तत्प्रमाणतः ॥ भाविते भृंगराजेन पंचानिंबेन तत्समात् ॥ ३३ ॥ बिडालपदमात्रं तु पयसालोड्य तं पिबेत् ॥ वारिणा यः पिबेत्प्राज्ञः शुभे काले शुभे दिने ॥ ३४ ॥ पीतमात्रं तु विज्ञाय तत्क्षणादेव जीर्यते ॥ न किंचित्परिहारोस्ति भोजनं सर्वकामुकः ॥ ३५ ॥ मासद्वित्रिप्रयोगेण जायते वीर्यवर्द्धनम् ॥ अष्टादशानि कुष्टानि सत्यं सत्यं महाक्रियात् ॥ ३६ ॥ वातं गुल्मं च पित्तं च व्याधिः सर्वाप्यशेषतः ॥ हरेत्सर्वाणि मेहानि नाशयेच्चंद्रदर्शनम् ॥ ३७ ॥ पंचवर्षशतंजीवी अपमृत्युविवर्जितः ॥ सद्यः प्रत्ययकारं च पंचनिंबरसायनम् ॥ ३८ ॥ २५.

**अथ तृणज्योतिकल्पः** ॥ रात्रौ प्रज्वलते नित्यं तृणेन सदृशं भवेत् ॥ तस्य मूलं समादाय क्षीरमध्ये निवेशयेत् ॥ ३९ ॥ तत्क्षणाज्जायते रक्तं तत्तु क्षीरं पिबेद्बुधः ॥ सप्तरात्रप्रयोगेण वलीपलितवर्जितः ॥ ४० ॥ क्षीरेण नियताहारो लवणाम्लं च वर्जयेत ॥ द्विरष्टवर्षाकारोसौ जीवेद्वर्षसहस्रकम् ॥ ४१ ॥ तस्य मूलं तु संगृह्य रसगंधकतत्समम् ॥ मातुलिंगरसेणैव एकीकृत्वा तु मर्दयेत् ॥ ४२ ॥ लपयेच्छुल्बपत्राणि त्रिपुटं हेमशोभनम ॥ महिषीनवनीतेन तस्य मूलानि लेपयेत ॥ ४३ ॥ कपिलाज्यप्रदीपं च नृकपाले शिवालये ॥ कज्जलं धारयेत्प्राज्ञः कृष्णाष्टमी चतुर्दशी ॥ ४४ ॥ पूजां कृत्वा विधानेन शुचिर्भूत्वा हि साधकः ॥ तनैवांजितनेत्रस्तु अदृश्यो जायते पुमान् ॥ ४५ ॥ २५.

**अथ श्वेतार्ककल्पः** ॥ पुष्यार्केण गृहीत्वा तु श्वेतार्कः सर्वसिद्धिदः ॥ पंचागं चूर्णयेद्धीमान् मध्वाज्येन भक्षयेत् ॥ ४६ ॥ जीर्णांते भोजनं कुर्यात् षष्टिकाक्षीरभोजनम् ॥ वर्जयेत्तैलमाम्लं च मासमेकं तु भयक्षेत् ॥ ४७ ॥ वलीपलितनिर्मुक्तो महाबलपराक्रमः ॥ श्वेतार्करोचना चैव वामहस्तकनिष्ठिके ॥ ४७ ॥ ललाटे तिलकं कृत्वा त्रै-

लोकयं क्षोभयेत्क्षणात् ॥ तिलकं दृष्टमात्रेण प्रस्यामतिनरामता: ॥ ४९ ॥ पंचागं तस्य संगृह्य छायाशुष्कं तु कारयेत् ॥ बिडालपदमात्रं तु घृतेन मधुना सह ॥ ५० ॥ एकविंशाद्दिनं भक्षत् धृतिमेधा प्रजायते ॥ मासैकेन प्रयोगेण सर्वव्याधिविवर्जितः ॥ ५१ ॥ मासद्वय प्रयोगेण सर्वरोगविवर्जितः ॥ नवनागबली भूत्वा सूर्यकांत इवापरः ॥ ५२ ॥ द्विरष्टवर्षकायोसौ सहस्त्रायुर्भवेन्नरः षण्मासस्य प्रयोगेण अमरो जायते पुमान् ॥ ५३ ॥ क्षीराहारप्रभुंजानो वातातपविवर्जितः ॥ कटुम्लतैलवर्जी स्यात् कषाय-क्षारवर्जितः ॥ ५४ ॥ एवमेवविधानेन सर्वसिद्धिर्भविष्यति ॥ ५६ ॥ २७. **अथ शुंठीकल्पः** । उत्तमं नागरं ग्राह्यं चूर्णितं वस्त्रगालितम् ॥ गुडेन मधुना गव्यसर्पिषा मार्दितं भवेत् ॥ ५६ ॥ सुस्निग्धभांडे निक्षिप्य धान्य-राशौ निधापयेत् ॥ मासं मासं समुधृत्य कृत्वा कायविशोधनम् ॥ ५७ ॥ सुस्निग्धं भक्षयेत्प्राज्ञो बिडालपदमात्रकम ॥ दिनसप्तप्रयोगेण सर्वरोगं निवारयेत् ॥ ५८ ॥ षण्माससेवनाज्जीवेन्नरो वर्षशतत्रयम ॥ बृहस्पति-समो बुध्या सर्वशास्त्रविशारदः ॥ ५९ ॥. नागार्जुनसमाख्यातः कल्पोऽय-ममृताभिधः ॥ २८. **अथ पाठाकल्पः** । पाठामूलं मुखे क्षिप्तं खड्गसैन्य निवारयेत् ॥ ६० ॥ तदेव सर्पिषा पीतं विषं सर्पस्य नाशनम् ॥ विद्यु-त्पातं तथा कांडे कटौ बद्धं शिखास्थितम् ॥ ६१ ॥ दिव्यसंघाप्रियत्वं च सर्वेषां कुरुते सदा ॥ मंत्रः ॥ ॐ नमो माहेश्वरीसिद्धेश्वरीबंधः ॥ २ । हूं फट् स्वाहा ॥ पाठामूलं गले बध्वा क्षीरभांडस्य तद्भिः ॥ जायते तत्क्षणाद्दुग्धं सत्यमेव न संशयः ॥ ६२ ॥ पुष्ये संगृह्य पाठाया मूलमास्ये विनिक्षिपेत् ॥ गुहासमरसं रंभे शस्त्रास्त्रैर्न हन्यते ॥ ६३ ॥ २९. अथ **भूकदंबकल्पः** ॥ भूकदंबास्त्रिधाः प्रोक्ताः शुक्लो रक्तो सितस्तथा ॥ पुष्ये भानौ सिते पक्षे समूलं पल्लवान्वितम ॥ ६४ ॥ गृहीत्वा शोषयित्वा तु छायायां शुष्कचूर्णितम ॥ सुदिने शुभनक्षत्रे सर्पिषा सह भक्षयेत ॥ ६५ ॥ जीर्णांतेष्वय भुंजी तक्षीरान्नं च जितेंद्रियः ॥ षण्मासाधोगतिं यांति वलयैः पतितैः सह ॥ ६६ ॥ घृतेन मधुसंयुक्तं सर्वव्याधिविवर्जितम् ॥ सर्पिषा

तु प्रयोक्तव्य। पलितं हंति वेगतः ॥ ६७ ॥ वातं कांजिकसंयुक्तं युक्तं जलसमन्वितम् ॥ जलोदरे च तक्रेण दध्ना गुल्मप्रयोजनम् ॥ ६८ ॥ कुष्ठं मध्वाज्यसंयुक्तं निःशेषरोगवर्जितम् ॥ भूकदंबस्य वृक्षस्य मंत्रितः शुभनोदितः ॥ ६९ ॥ अथ मंत्रः ॥ ॐ अमृतोद्भवाय अमृतं मे कुरु ठठः ॥

३०. **अथ धात्रीकल्पः** ॥ धात्रीफलानि चूर्णानि तिलचूर्णैः समांशकः ॥ ७० ॥ घृतमाक्षिभ्यामालोड्य त्रिंशद्रात्रेषु भुज्यमान् ॥ पुरुषः सारस्वतसिद्धिर्वृद्धोपि तरुणायते ॥ ७१ ॥ गद्यम्-पलाशबीजचूर्णेन समतुल्यकाभ्यां समभागाभ्यां अग्निबलानुसारेण निद्राकाले भुक्त्वा पुरुषो जयति॥ शशिर्तौ काले अश्वगंधाचूर्णं तिलचूर्णं समाप्लुतिमाक्षिकाभ्यां आलोड्य बलहीनो भुक्त्वा मासेन वृद्धोपि यौवनं व्रजति ॥ पद्यम्-कुष्ठचूर्णं तु मध्वाज्यं नित्यं कर्षं पिबेन्नरः ॥ वत्सरं दिव्यदेहः स्यात् गंधेन शतपुष्पवत् ॥ ७२ ॥ हरीतकीवचाकुष्ठं पिप्पलीविश्वभेषजम् ॥ वटवृक्षस्तथा ब्राह्मी शंखपुष्पी तथैव च ॥ ७३ ॥ एतानि समचूर्णानि कारयेत्सर्पिषा सह ॥ बिडालपदमात्रेण वलीपलितवर्जितः ॥ ७४ ॥ सप्तरात्रं तु मेधावी द्वाभ्यां श्रुतिधरो भवेत् ॥ एकविंशतिरात्रेण स्वयमेवकविर्भवेत् ॥ ७५ ॥

३१. **अथ गंधककल्पः** ॥ ईश्वर उवाच ॥ श्रुणु देवि प्रवक्ष्यामि यथा योगेन गंधकम् ॥ क्रियते बहुधा योगो श्रृणुष्वायतलोचने ॥ ७६ ॥ क्षीरोदसागरे देवी मथ्यमाने सुरासुरैः ॥ उत्पन्नममृतं सारं दिव्यरूपं महाबलम् ॥ ७७ ॥ तस्य सुश्रांगिगंधेन मोहितः सर्वदेवताः ॥ गंधकं नाम विख्यातं जरादारिद्र्यनाशनम ॥ ७८ ॥ पीतं चैव तथा श्वेतं कृष्णवर्णं तृतीयकम् ॥ सरक्तञ्च चतुर्थं स्याद्विप्रादीनां क्रमात्प्रिये ॥ ७९ ॥ वमनं रेचनं कृत्वा रसायनं समाचरेत् ॥ शुभे मुहूर्ते नक्षत्रे अर्चयित्वा जगत्पतिम् ॥ ८० ॥ वक्ष्यमाणप्रयोगेण भक्ष्यं पथ्यादिकानि च ॥ षष्ठिका च भव व्याली गोधूमाश्च वरानने ॥ ८१ ॥ बालकानि च मांसानि तित्तिरिक्षागलानि च ॥ कृष्णमुद्गा च सर्पिश्च सिताक्षीरं च तक्रकम्॥८२ एतद्देवी सदा पथ्यं अपथ्यं परिवर्जयेत् ॥ कटुतिक्तकषायानि तैलं कां-

जिकराजिकम् ॥ ८३ ॥ स्त्रीसेवारोहणं यानं प्रवातादीननुवर्जयेत् ॥ कोद्रवान्नं कुलित्थं च कर्तव्यं पथ्यभोजनम् ॥ ८४ ॥ लवणाम्लविपाकानि द्विदलानि च वर्जयेत् ॥ मंत्रेणानेन संमंत्र्य भक्षयेत्तं वरानने ॥ ८५ ॥ अथ मंत्रः ॥ ॐ नमो भैरवाय अमृतसिद्धाय अमृतसाध्याय जातवेदनंदिर्भेदेण अमृतत्वं कुरुष्व मां स्वाहा ॥ वायुवेगिनी सिद्धि कुरु कुरु स्वाहा ॥ अनेन मंत्रजाप्येन गंधकं ग्राहयेत्प्रिये ॥ गंधकं त्रिफलाचूर्णं भृंगराजं समांशकम् ॥ ८६ ॥ संवत्सरप्रयोगेण जीवेदाचंद्रतारकम् ॥ सूतकस्य त्रयं देवि चत्वारो गंधकस्य च ॥ ८७ ॥ दारुकायंत्रसंयुक्तं जायते भस्मसूतकम् ॥ संवत्सरप्रयोगेण ममतुल्यपराक्रमः ॥ ८८ ॥ तस्य मूत्रपुरीषेण शुल्बं भवति कांचनम् ॥ गंधकस्य पलं देवि भक्षयेच्च दिने दिने ॥ ८९ ॥ गंधकं त्रिफलायुक्तं घृतेन मधुना सह ॥ भक्षितं हि महारोगान् हंति मासेन पार्वती ॥ ९० ॥ गंधकं सूतकं चैव निर्गुंडीरसमर्दितम् ॥ कुष्ठमष्टादशं हंति विषं हंति जरापहम ॥ ९१ ॥ गंधकं रससंयुक्तं सुगंधिरसमर्दितम् ॥ ताम्रपत्रप्रलेपेन त्रिपुटं कांचनं भवेत् ॥ ॥ ९२ ॥ गंधकं चूर्णं निक्षिप्य कषायं चांगुलीगजम् ॥ एवं क्रमचितो देवि मर्दितं रसगंधकम् ॥ ९३ ॥ नवनीतसमा पिंडी जायते वरपिष्टिका ॥ दत्वा लघुपुटं पश्चात् हेमपत्राणि लेपयेत् ॥ ९४ ॥ पुटपाकेन देवेशी वर्धने वर्णपंचकम् ॥ पुनर्नवान्वितं गंधं त्रिविधं विषनाशनम् ॥ ९५ ॥ धात्रीरसेन संयुक्तो अजीर्णं हरते ध्रुवम् ॥ गुडेन सहगंधं च प्रमेहस्य विनाशनम् ॥ ९६ ॥ रसेन गंधकं पीतं सर्वव्याधिविनाशनम् ॥ चूर्णीकृत्य पलानि पंच नितरान् धीमान्मनोयत्नशश्चूर्णस्य त्रिगुणे तु मार्कवरसे छायाविशुष्कीकृतम् ॥ पथ्याचूर्णमथो शिवामधघृतं प्रत्येकमेपा पलं वृद्धा यौवनमेति मासयुगुलात् खादेन्नरः प्रत्यहम ॥ ९७ ॥ ३२.

**अथ ज्योतिष्मतीकल्पः** ॥ कैलासशिरासीनं देवदेवं महेश्वरम् ॥ प्रणम्य परया भक्त्या देवी वचनमब्रवीत् ॥ ९८ ॥ भगवन्मानवाः सर्वे घोरैः क्लिश्यंति दुष्कृतैः ॥ तेषामेव हितार्थाय सुखवक्तुं सुखावहम् ॥

॥ ९९ ॥ येनोपायेन देवे  तुष्यंति मानवाः ॥ येन सिद्धिर्भवेज्जंतो
येन यांति परां गतिम् ॥ १०० ॥ इति पृष्टं तदा देव्या विमलं ता-
मथाब्रवीत् ॥ श्रुणु देवि महाभागे लोकविस्मयकारकम् ॥ १०१ ॥
ज्योतिष्मतीति विख्यातं रसायनमनुत्तमम् ॥ सुतिथौ शुभनक्षत्रे शुभयोगे
शुभे दिने ॥ २ ॥ कुंकुमाक्षतमात्रेण तामादौ परिमंत्रयेत् ॥ अर्घ्यपाद्यं
ततो दत्वा रक्ततंदुलसंयुतम् ॥ ३ ॥रक्तचंदनकुसुमैरर्चयेदिष्टदेवताम ॥
इष्टदैवतामंत्रेण तत्तन्मंत्रेण वा पुनः ॥ ४ ॥ कुर्यादर्घ्यादिकां पूजां नै-
वेद्यं च यथाविधि ॥ उत्तराभिमुखो भूत्वा साधकः सुसमाहितः ॥ ५ ॥
सुगंधिकुसुमैर्युक्तं कुंकुमेन विलेपनम ॥ तांबूलं भक्षयेत्प्राज्ञः सुतुष्टेनैव
चेतसा ॥ ६ ॥ यथोपस्कारसंयुक्तं पूजयित्वा महौषधीम् ॥ बीजानि
तस्य संगृह्य शोषयेत्सम्यगातपे ॥ ७ ॥ चूर्णयित्वा ततस्तानि तेषां तैलं
समुद्धरेत् ॥ ततस्तैलं समं क्षीरं मधुपाकेन संयुतम् ॥ ससमृद्धाग्निना पात्रे
तैलशेषं तु कारयेत् ॥ जातीफलानि संयुक्तमंकोलं कुष्ठमेव च ॥ ९ ॥
एतानि समभागानि चूर्णीकृत्वा विचक्षणः ॥ कर्षमेकं तु तच्चूर्णं तैलमध्ये
सुरेश्वरी ॥ १० ॥ प्रक्षिप्य लोडच तत्तैलं स्निग्धभांडे विनिक्षिपेत् ॥ अ-
च्छिद्रमुद्रितं कृत्वा तद्भांडं सुदृढं ततः ॥ ११ ॥ धान्यराशौ विनिक्षिप्य
दिनानामेकविंशतिः ॥ त्रिंशद्वा सप्ततिर्वापि नवतिर्वा शतानि च ॥ १२
॥ अधिकं वा यथायोगं तत उद्धृत्य तं नरः ॥ सुतिथौ शुद्धकायस्तु
निर्वातभुवनेश्वरी ॥ १३ ॥ सुमुहूर्ते शुभे वारे शुभचंद्रे सुतारके ॥ कृत्वा-
न्हिकः शुचिर्भूत्वा तैलं सूर्योदये पिबेत् ॥ १४ ॥ ततो निःसंज्ञतां प्राप्य
लब्धसंज्ञः शनैः शनैः ॥ परिश्राम्य च क्षीरेण पानं दद्यान्मधूत्तमम् ॥१५
॥ पीत्वा क्षीरं ततः स्वस्थः शनैर्भवति साधकः ॥ जीर्णे तैले ततः पश्चा-
द्भोजनं षष्टिकोदनम्॥ १६ ॥ एवं क्षीरेण भुंजीयात्प्रत्यहं विहिताशनः
॥ स भवेत्सूर्यसंकाशो वपुषा दिव्यतेजसा ॥ १७ ॥ अश्रुतान्यपि
शास्त्राणि शीलयेदर्थयोगतः ॥ खगेंद्रसदृशो लोके दिवा पश्यति तारका-
म् ॥ १८ ॥ मध्यंदिने गते सूर्ये पश्येद्दिवि हि तारकम् ॥ शब्दं श्रृणोति

हसोपि शीर्यते परमं तपः ॥ १९ ॥ हंत्यष्टादशकुष्ठानि सर्वरोगान्निहंति च ॥ एकमासप्रयोगेण फलमुक्तं सुरेश्वरि ॥ २० ॥ द्वितीयादिषु मासेषु फलानि गद्यते शृणु ॥ तानि वक्ष्यामि सर्वाणि दुर्लभानि दुरात्मनः ॥ २१ ॥ तृतीयं सेवते यस्तु मासानां तु यथाविधि ॥ यक्षराक्षसगंधर्वैः सुसंपूज्यो भवेन्नरः ॥ २२ ॥ एके च महते घोरः कीर्तितः पापकर्मणाः ॥ सर्वे च सेवया तस्य प्रयांति परमां गतिम् ॥ २३ ॥ चतुर्थस्य च मासस्य शृणु देवि यथाफलम् ॥ देवान् यक्षान् किन्नरांश्च नागांश्चैव महोरगान् ॥ २४ ॥ याति तस्यैव सद्भावं कुर्वीत तत्क्रियं सदा ॥ पुटं तद्यमयं कृत्वा पुटस्याभ्यंतरे तथा ॥ २५ ॥ मूत्रेण पूरयित्वा च भूमिं खात्वा निधापयेत् ॥ मासांते तत्समुद्धृत्य पुटं कांचनतां व्रजेत ॥ २६ ॥ चतुर्थस्य तु मासस्य शृणु देवि यथाफलम् ॥ औषधं सेवते यस्त पथ्यभोजनसंयुतम् ॥ २७ ॥ पुण्यश्लोके स्फुरन्मूर्तिः सर्वैश्वर्यसमान्वितम् ॥ वसेदमरलोकेषु दिनानि ब्रह्मणोदितान् ॥ २८ ॥ तस्य मूत्रमलैः स्वेदैस्तस्य उद्वर्तनेन च ॥ शुल्बपत्रं लिपेत्तत्र दग्धं भवति कांचनम् ॥ २९ ॥ षण्मासं कुर्वतस्तस्य शृणु सिद्धिं सुरेश्वरी ॥ क्रीडते स महासिद्धो लक्ष्मीवानमरद्युतिः ॥ ३० ॥ शिवतुल्यो महावीर्यो विचरेत् परितो जगत् ॥ सेवते सप्तमासं तु दिनानि यतः सदा ॥ ३१ ॥ जितेंद्रियो जितक्रोधो भूतानां च हितेरतः ॥ विष्णोर्दिनानि यावत्स तावज्जीवेत्स साधकः ॥ ३२ ॥ धर्माधर्मैर्न लिप्यते विधिवत्साधकोत्तमः ॥ विचरित्वा महावीरः साक्षाद्देवमयो विभुः ॥ ३३ ॥ अष्टमासप्रयोगस्य श्रुणु देवि यथाफलम् ॥ दिव्यरूपो महातेजा दिव्यरूपधरो भवेत् ॥३४॥ निर्वाणपदमाप्नोति ज्योतिष्मत्याः प्रभावतः ॥ तत्प्रत्यार्थं समालोक्य मार्गामार्गप्रदर्शकः ॥ ३५ ॥ रसायनं परं दिव्यं गोपनीयं प्रयत्नतः ॥ नैतत्कर्मप्रकुर्वीत मोहेनोपकृतो नरः ॥ ३६ ॥ विघ्नेनोपहता केचित् नास्तिका अल्पबुद्धयः ॥ क्रिया ज्ञानतया किंचिन्मरणं शंकया यथा ॥ ३७ ॥ नवमासप्रयोगेण शृणु देवि यथाफलम् ॥ कामरूपी महाधीरश्चिंतामणिरिवोत्तमः ॥ ३८ ॥ यद्यत्प्रतीच्छते रूपं तत्तद्रूपं

प्रपद्यत ॥ इंद्ररूपं वा ... चंद्ररूपं करोति यः ॥ ३९ ॥ ब्रह्मरूपं विष्णुरूपं रूद्ररूपं करोति यः ॥ यत्र यद्रोचते रूपं तत्तत्कर्तुप्रभुर्भवेत् ॥ ४० ॥ क्षौद्राज्येन सुचूर्णितं यदि नरो ज्योतिष्मतीपंचकम् ॥ कोष्ठास्थं तु-रसायनं त्रिफलया गोमूत्रपक्कं घृतम्॥ संयुक्तं च निशाद्वयं कृमिहरं चित्र-योमराज्यायुतं कुष्ठघ्नं सुरसामुखामयहरं नश्यंति ते गौरवात् ॥ ४१ ॥३३.

**अथ देवदालिकल्पः** ॥ देवदालिरसं गृह्य द्विगुणं च रसं भवेत् ॥ धात्रीरसेन संयुक्तं पाचयेल्लोहभाजने ॥ ४२ ॥ धात्री शुष्कें वनेनैव पाचयेन्मृदुवन्हिना ॥ ततो नस्यं प्रकुर्वीत भुंजतं क्षीरभोजनम् ॥ ४३ ॥ अपस्मारं क्षयं कुष्ठं वातं नश्यति तत्क्षणात् ॥ प्रेतराक्षसभूतानि· सप्ताहाद्दशमाचरेत् ॥ ४४ ॥ देवदालीरसं क्षौद्रं पारदं प्रवणं तथा ॥ नस्यकर्मप्रयोगेण वंध्याप्रजननं भवेत ॥ ४५ ॥ देवदालीरसं क्षौद्रं सार्षिषामलकीरसम् ॥ सहशुक्रा तु मेधावी श्रुतिद्वयधरो भवेत् ॥ ४६ ॥ देवदालीरसं चैव क्षीरेणे समसर्पिषा ॥ पिबेदेकमहोरात्रे मासे लिंगं समुद्धरेत् ॥ ४७ ॥ सपत्रां देवदालीं तु विधिना च समाहरेत् ॥ पिष्ट्वा तु गुटिकां कृत्वा छायायां परिशोषयेत् ॥ ४८ ॥ प्रत्यूषे भक्षयेत्प्राज्ञो प्रणम्य वृषभध्वजम् ॥ नश्यंति वातगुल्मानि ये चान्ये व्याधयस्तथा ॥ ४९ ॥ देवदाल्यस्तु पंचांगं सूक्ष्मचूर्णं तु कारयेत् ॥ तच्चूर्णं सर्पिषा लेह्य यः पिबेत् सप्तगात्रकम् ॥ ५० ॥ सर्वभूतवशीकर्तुः स्त्रीणां प्रियतमो भवेत् ॥ देवदालीरसं गृह्य श्वेतसिद्धार्थसंयुतम् ॥ ५१ ॥ रिंगण्यायाः समायुक्तं गुटिकां कारयेद्बुधः ॥ सुवर्णवेष्टितं कृत्वा शिखायां बंधयेन्नरः ॥ ॥ ५२ ॥ राजानो वशमायांति स्त्रियश्च पुरुषास्तथा ॥ नश्यंति सर्वरोगांश्च न च राज्ञो भयं तथा ॥ ५३ ॥ द्रावयेत्सर्वसत्वानि पारदं चैव शुध्यति ॥ तारैर्हेत्सुमतं हेमं गुंजामात्रं तु कारयेत् ॥ ५४ ॥ एकैकं भक्षयेत्प्राज्ञो जीर्णंते भोजनं तथा ॥ आम्लं तु लवणं चैव वर्जयित्वा तु बुद्धिमान् ॥ ५५ ॥ क्षीरषष्ठि सुभोज्यं स्यात्मासमात्रप्रयोगतः ॥ अमरत्वमवाप्नोति साक्षाद्रुद्र इवापरः ॥ ५६ ॥ शुक्लपक्षे पौर्णमास्यां पुण्य-

योगे शुभे दिने ॥ विधिना तु बलिं दत्वा पंचा... समाहरेत् ॥ १७ ॥ देवदालीरसं तुल्यं घृतं मधुसमन्वितम् ॥ सप्तरात्रं पिबेन्नित्यं मेधावी जायते नरः ॥ १८ ॥ एकमासप्रयोगेण जीवेद्वर्षशतद्वयम् ॥ नमस्कृत्वा सिताष्टम्यां चतुर्दश्यां ततो नरः ॥ १९ ॥ जपेदष्ट सहस्रं च होमांते संख्यया पुमान् ॥ अनेनैव प्रयोगेण नमस्कृत्वा जितेंद्रियः ॥ ६० ॥ प्रदक्षिणत्रयं कृत्वा देवदालीं समुद्धरेत् ॥ ॐ नमो भगवते ईश्वराय सोमसंभवाय देवदालीं नमामि स्वाहा ॥ ॐ महेशाय हृ० ॐ भूता-धिपतये शि० ॐ अमृतगमने शि० ॐ मां रक्ष० स्वाहा क० ॥ देवदाली महाभूताधिपतये न० महाबलाय स्वाहा अस्त्रं ॥ अथ भक्षणमंत्रः ॐ देवप्रयत्नेन निर्विघ्नं जायते ॐ नमः स्वाहा सप्तजाप्येन मंत्रेण ...त् प्रयतः शुचिः । प्राङ्मुखोदङ्मुखो वापि उत्पाट्य सुसमाहितः ॥ ...१ ॥ प्रक्षाल्योलूखले नैव रसं गृह्य प्रयत्नतः ॥ पयसा भोजये-...प्य पचेत्सम्यक्कथाग्निजित् ॥ ६२ ॥ वमनं रेचनं कृत्वा शुभवारे-... दिने ॥ एकमासप्रयोगेण छिद्रं पश्यति मेदिनीम् ॥ ६३ ॥ जीवे-...हस्रं तु महातेजा जयान्वितः ॥ आदित्यश्च त्रिभिर्मासै जायते च ...श ः ॥ ६४ ॥ अथ वै पंचमे मासि महादेवं प्रपश्यति ॥ विष्णुः ...महश्चैव ये चान्ये दिव्ययागिनः ॥ ६५ ॥ निमिषेण नरो याति ...नानां सहस्रकम् ॥ अन्यं तु संप्रवक्ष्यामि प्रयोगं श्रुणु पार्वती ॥ ...६ ॥ औषध्यास्तु समं गृह्य लक्ष्मणायः समेन च ॥ उदकया एव ...वा सा पुत्रं लभते ध्रुवम् ॥ ६७ ॥ अस्या रसं घृतं क्षौद्रं क्षीरवृक्ष...ः पिबेत् ॥ रमते मुदितः स्त्रीभिस्तस्य लिंगं समुद्धरेत् ॥ ६८ ॥ ...स्या रसघृतं क्षौद्रं सर्पिषामलकीरसः ॥ पीतमात्रेण मेधावी सर्वश्रुति-... भवेत् ॥ ६९ ॥ अस्या सर्पिषमूलानि सूक्ष्मचूर्णानि कारयेत् ॥ ...कर्षमात्रेण पिबेदुष्णेन वारिणा ॥ ७० ॥ तत्तु गुल्मोदरं प्लीहं ...नि च भगंदरम् ॥ कामलादिमहारोगान् नाशयंति न संशयः ॥ ...७१ ॥ अस्या चूर्णं तु संगृह्य वाजिगंधासमन्वितम् ॥ सर्पिषा भक्षये-

नित्यं वशीकरणमुत्तमम् ॥ ७२ ॥ यां यां कामयते पूर्वं तासां भवति वल्लभः ॥ सिद्धार्था देवदाली च लक्ष्मणाया समीन्वता ॥ ७३ ॥ पीत्वा नारीसहस्राणि रमते नात्र संशयः ॥ अस्या रसं स्वहस्तेन पेषयित्वा तुयः पिबेत् ॥ ७४ ॥ तत्क्षणाद्ध्रशमाप्नोति नात्र कार्या विचारणा । अस्या रसं तु संगृह्य कृष्णगोक्षीरसंयुतम् ॥ ७५ ॥ पारदं बंधयेदाशु तारं हेममयं भवेत् ॥ अस्या रसं तु केतक्या नेत्रयो रंजयेत्सदा ॥ ७६ ॥ तस्य सर्वाणि भूतानि पश्यंति नात्र संशयः । अस्या रसं तु संगृह्य कृष्णगोक्षीरसंयुतम् ॥ ७७ ॥ पीत्वा वंध्या लभेत्पुत्रं नात्र कार्या विचारणा ॥ इति संगृह्य लोकेषु न देयं यस्य कस्य चित् ॥ ७८ ॥ गोपनीयं प्रयत्नेन इत्याज्ञा परमेश्वरी ॥ ३४ **अथ एरंडकल्पः** ॥ अथान्यत्संप्रवक्ष्यामि श्रुणुष्वा-यतलोचने ॥ एरंडकल्पमत्यंतमुत्तमं शंकरं नृणाम् ॥ ७९ ॥ पुनरन्यं प्रव-क्ष्यामि तुष्टवुश्वाविशेषतः ॥ चतुर्विधं तु विज्ञेयं रक्तपीतादिनोदतः ॥ ८० ॥ तत्तैलं सूर्यवारेण ग्राहयेद्विधिवत्ततः ॥ रक्तएरंडतैलेन शुद्धसूतकगंधकैः ॥ ८१ ॥ मेलयित्वा पचेत्तैलं लोहपात्रे विशेषतः ॥ याममात्रं पचेद्धीमान् गुंजं गुंजानिभं भवेत् ॥ ८२ ॥ तत्तारं नागपत्रेषु सहस्रांशेन वेधयेत् ॥ तत्तैलं मधुना युक्तं गंधकेन समन्वितम् ॥ ८३ ॥ भुविमासं विनिक्षिप्य ततोद्धृत्य तु संग्रहेत् ॥ प्रातर्निष्कचतुष्कं तु लिहेदहनमुत्तमम् ॥ ८४ ॥ तरुणादित्यसंकाशो भवेन्मासप्रयोगतः ॥ शुद्धकोष्ठकृतः सेवेद्गुरोर्वचन-पूर्वकम् ॥ ८५ ॥ क्षीराहारं प्रकुर्वीत सत्यवाक् विजितेंद्रियः ॥ मासद्व-यप्रयोगेण सहस्रायुर्भवेन्नर ॥ ८६ ॥ मासत्रयप्रयोगेण जीवेदाचंद्रतार-कम् । मासषट्कप्रयोगेण ब्रह्मायुः स भवेन्नरः ॥ ८७ ॥ संवत्सरप्रयो-गेण विष्णुतुल्यो भवेन्नरः ॥ द्वादशाब्दप्रयोगेण जीवन्मुक्तो न संशयः ॥ ८८ ॥ कृष्णैरंडस्य तैलं तु कृष्णगोक्षीरसंयुतम् ॥ शुद्धकोष्ठः पिबे-त्सद्यः स सुरैरपि दृश्यते ॥ ८९ ॥ कृष्णागोक्षीरसंयुक्तं मधुना च समा-युतम् ॥ तत्तैलपिष्टमानस्तु बद्धो भवति पारदः ॥ ९० ॥ मृतयोगे सहस्रे द्वे द्वेधा मज्जनमात्रकम् ॥ तद्गंग धवलायांति यावदाचंद्रतारकम् ॥ ९१ ॥

नद्धंगधारणादेव खेचरः स तु जायते ॥ अंजनात्सप्तपातालं पश्येन्मध्या-न्हभास्करम् ॥ ९२ ॥ सर्वांजनमिदं ख्यातं सिद्धयोगमुहाद्भुतम् ॥ अदृश्यो देवदैत्यानां विष्णुलोके चरत्यसौ ॥ ९३ ॥ श्वेतैरंडस्य मूलं तु गृहीत्वा पुष्यभास्करे ॥ तत्तैलेन च घृष्टं तु कर्पूरेण समन्वितम् ॥ ९४ ॥ अजं-येन्नेत्रयुगुलं सप्तपातालदर्शनम् ॥ सिद्धांजनमिदं सिद्धं सिद्धयोगाविनिर्मि-तम् ॥ ९५ ॥ तत्फलं मार्गपाषाणशुद्धसूतसमन्वितम् ॥ लिकुचंद्रवसंयुक्त-मंधमूषागतं धमेत् ॥ ९६ ॥ शाल्मलीखदिरांगारैर्बद्धो भवति तत्फलम् ॥ तद्धंगेषु हतौ क्षिप्तं सहस्रांशेन वेधकृत् ॥ ९७ ॥ श्वेतगोक्षुरिसंयुक्तं तन्मूलं निष्कमात्रकम् ॥ लिहेद्गोघृतसंयुक्तं क्षीराशी च जितेंद्रियः ॥ ९८ ॥ मासमेकप्रयोगेण दिवा पश्यति तारकम् ॥ मासद्वयप्रयोगेण चंद्रवन्नि-र्मलो भवेत् ॥ ९९ ॥ मासत्रयप्रयोगेण खेचरत्वं लभेन्नरः ॥ मासषट्-[illegible]गेण पातालं पश्यति ध्रुवम् ॥ १०० ॥ संवत्सरप्रयोगेण जीवेद्ब्र-[illegible]ष्टकम् ॥ पीतैरंडस्य मूलं तु ग्राहयेत्पुष्यभास्करे ॥ १ ॥ छाया-[illegible] ततः कुर्यान्नवनीतेन पेषयेत् ॥ त्रिकटुत्रिफलायुक्तं सिताज्यमधु-[illegible]म् ॥ २ ॥ स्निग्धभांडे विनिक्षिप्य भूतले च ततः क्षिपेत् ॥ मासा-[illegible] तं नित्यं लिहेन्निष्कं तु यत्नतः ॥ ३ ॥ निवासाद्वीक्षणांते [illegible]म्लानमानसः ॥ एकमासप्रयोगेण वलीपलितवर्जितः ॥ ४ ॥ मासत्र-[illegible]गेण जीवेदाचंद्रतारकम् ॥ संवत्सरप्रयोगेण देवैः सह मोदते [illegible] ॥ ३५. अथ मुसलीकल्पः ॥ अथ ब्रवीमि देवेशी मुसलीकल्प[illegible] ॥ स्वर्णपुष्पी च खर्जूरी पत्रवत्यातिशोभना ॥ ६ ॥ अतिश्वेता [illegible] च मुसली मुसली स्मृता ॥ तन्मूलं च समुद्धृत्य छायाशुष्कं तु [illegible]म् ॥ ७ ॥ कर्षं मध्वाज्यसंयुक्तं प्रातः शुद्धः समुल्लिहेत् ॥ जीर्णे [illegible] भोजी स्यादम्लान्नं तु विवर्जयेत् ॥ ८ ॥ षष्ठे मासि भवेद्बालो [illegible] लभते धियं ॥ पयसा मुसलीचूर्णं दग्धाकायः पिबेत्सुधीः ॥ ९ ॥ [illegible]मवाप्नोति शतस्त्रीगमने पटुः ॥ इति श्री शिवप्रोक्तायां कल्पव-[illegible] मुसलीकल्पः ॥ कल्पलतासमाप्तिमगमत् ॥

# महाराष्ट्रानुवाद.

**श्रीगणेशायनमः** । भगवान् श्रीशंकर पार्वतीदेवीप्रत ह्मणतात कीं हे प्राणवल्लभे, रसज्ञे पार्वति! मी तुला भुवनेश्वरी पद्धतीचें कथन करतों तें एकचित्तानें ऐक ॥ १ ॥

॥ **लक्ष्मणाकल्प** ॥ शुद्धपक्षामध्यें चतुर्दशीचे दिवशीं गुरुपुष्य योग असतांना लक्ष्मणा वनस्पतीला ( पांढरीं फुलें जिला येतात अशी कांटेरिंगणी ) 'ॐ सर्वार्थ साधनी लक्ष्मणायै स्वाहा' असा मंत्रोच्चार करून जमिनींतून काढावी व तिचें चांगलें जंतुदंश वगैरे दोषांनीं रहित असें मूळ घेऊन, तें काळ्या धोतऱ्याच्या फळामध्यें तीन दिवसपर्यंत ठेवावें. व मंत्रयुक्त ( . . . ) चूर्ण करून धारण केलें असतां तें वश करणारें आहे[3]; गोरोचन, लक्ष्मणामूल, चंदन व केशर हीं समभाग घेऊन त्याचा मुखाला लेप केला असतां विशेषेंकरून पुरुषाला मोहित करणारें आहे. ४ 'ॐ वशीनमोनमः' तें लक्ष्मणामूल राजाला वश करणारें आहे. तसेंच पिंवळ्या धोतऱ्याच्या रसाच्या या मुळाला भावना देऊन तें अग्नीवर ठेऊन त्याच्या धूपानें देहाला धूपित केलें असतां तो देह पाहून पति मोह पावतो. ५ ६ शिवलिंगीकल्प 'ॐ श्रीं इश्वरी सर्वदानवशंकरी तारासावित्र्यै स्वाहा' या मंत्रानें गंधपुष्पादिकांनीं शिवलिंगीचें पूजन करून त्या सभोंवतीं सूत्राचे तीन वेढे द्यावे. पुष्य किंवा रेवती नक्षत्र असेल त्या वेळीं त्याचें मूळ रतिवृद्धीकरतां दुधाबरोबर प्यावें ह्मणजे हजारों स्त्रिया भोगण्याचें सामर्थ्य येतें. शिवलिंगीच्या मुळास धोतऱ्याच्या रसाच्या पांचशें भावना द्याव्या व धोतऱ्याच्यातेलाचा त्याला लेप करावा, त्याच्या योगानें प्राण्याचा वध होतो (. . .) पाण्यामध्यें या मुळाचा कल्क करून त्याचा लेप अंगास केल्यानें मोह प्राप्त होतो व प्रबळ शत्रूलाही तत्काळ जिंकून विजय प्राप्त होतो. पुष्य नक्षत्रीं रवि असतां पूर्वींचा मंत्र ह्मणून शिवलिंगी मस्तकावर धारण केली असतां

